गरीयोभ्याम् गरीयोभ्यः गरीयस्यै गरीयसीभ्याम् गरीयसीभ्यः
गरीयसः गरीयोभ्याम् गरीयोभ्यः गरीयस्याः गरीयसीभ्याम् गरीयसीभ्यः
गरीयसः गरीयसोः गरीयसाम् गरीयस्याः गरीयस्योः गरीयसीनाम्
गरीयसि गरीयसोः गरीयस्सु गरीयस्याम् गरीयस्योः गरीयसीषु

നപുംസകലിംഗത്തിൽ गरीयः गरीयसी गरीयांसि എന്നിങ്ങനെ രൂപങ്ങൾ.

तर तम इष्ठ എന്നിവയിലവസാനിക്കുന്ന മററു പദങ്ങളെല്ലാം അകാരാന്തങ്ങളാണ്. സ്ത്രീലിംഗത്തിൽ प्रियतरा प्रियतमा ज्येष्ठा എന്നിങ്ങനെ ആകാരാന്തങ്ങളും.

---

## അഭ്യാസം

I विगृह्णीत (വിഗ്രഹിക്കുക) ഉദാ:—शुद्धपार्ष्णिः=शुद्धः पार्ष्णिः यस्य सः ।
1 मदगंधिभिः । 2 तन्नागाः । 3 आश्यानकर्दमाः । 4 वाजिनीराजना
5 गुप्तमूलप्रत्यन्तः ।

II പൂർവ്വപാഠസംക്ഷേപം തർജ്ജമചെയ്യുക.

III സംസ്കൃതത്തിലേക്ക് തർജ്ജമ ചെയ്യുക.

ഏഴിലംപാലകൾ പൂത്തു. അവയുടെ പൂക്കളിൽ നിന്നു പ്രസരിച്ച പരിമളം രഘുവിൻെറ സൈന്യത്തിലെ ആനകളെ മദിപ്പിച്ചു. നദികളിൽ വെള്ളം കുറഞ്ഞു. വഴികളിലെ ചളി ഉണങ്ങി. അതുകൊണ്ട് രഘുവിനു് യാത്രയ്ക്കുള്ള ഉത്സാഹം വൎദ്ധിച്ചു. പുരോഹിതന്മാർ കുതിരകൾക്ക് നീരാജനാകൎമ്മം ചെയ്തു. അതിൽനിന്നുയർന്നുവന്ന തീനാളങ്ങൾ രഘുവിനു വിജയം നല്കി. കേന്ദ്രം സംരക്ഷിക്കാനുള്ള ഒരുക്കങ്ങളെല്ലാം ചെയ്ത് മംഗളകർമ്മങ്ങൾക്കുശേഷം അദ്ദേഹം ദിഗ്ജയത്തിനു പുറപ്പെട്ടു. പണ്ട് പാലാഴി കടയപ്പെട്ടു. അപ്പോൾ തിരമാലകളിൽനിന്നു് പയഃകണങ്ങൾ മഹാവിഷ്ണുവിൻെറ ശരീരത്തിൽ വീണു. അതുപോലെ രഘു പുറപ്പെട്ടപ്പോൾ പൌരനാരിമാരാൽ അദ്ദേഹത്തിൻെറ ശരീരത്തിൽ മലർവിതറപ്പെട്ടു.

(पुष्पिता अभवन् = പൂത്തു. अल्पजला = വെള്ളംകുറഞ്ഞ. मथ् = കടയുക. अवकीर्यते = വിതറപ്പെടുന്നു. उत्पत् = ഉയരുക)

IV धाव् (ഓടുക, അകൎമ്മകം) पठ् (സകൎമ്മകം) എന്നീധാതുക്കളെപ്രയോഗിച്ച് ക്രിയകളുടെ അവാന്തരവിഭാഗങ്ങൾ ഉദാഹരിക്കുക

V തൃതീയ ചതുൎത്ഥി എന്നീ വിഭക്തിപ്രത്യയം ചേരുമ്പോൾ അജന്തങ്ങളും ഹലന്തങ്ങളുമായ ശബ്ദങ്ങൾക്കുള്ള മാററങ്ങൾ താരതമ്യപ്പെടുത്തി ഉറപ്പിക്കുക.

---

# ദിവസം ഇരുപതു്

അടുത്ത ദിവസം മുതൽ അധ്യാപനമാധ്യമം സംസ്കൃതമായി മാറുകയാണു്. അതിനുമുമ്പു് ഇതുവരെ പഠിച്ച നിയമങ്ങളും പ്രയോഗങ്ങളുമെല്ലാം ഒന്നിണക്കിച്ചേർക്കേണ്ടതുണ്ടു്. ഈ ദിവസം അതിനുവേണ്ടി വിനിയോഗിക്കുന്നു.

സംസ്കൃതഭാഷയിൽ സാധാരണ കണ്ടുവരാറുള്ള നിയമങ്ങളും പ്രയോഗങ്ങളുമെല്ലാം സന്ദർഭാനുസാരമുദാഹരിച്ചുകൊണ്ടു് സരളമായ ഭാഷയിൽ രാമായണകഥ ഇവിടെ സംക്ഷേപിക്കുകയാണു്. അതു മുഴുവനും മനസ്സിരുത്തി പഠിച്ചു് അവസാനം കൊടുക്കുന്ന അഭ്യാസങ്ങളും ചെയ്തുകഴിഞ്ഞാൽ നമുക്കു് സംസ്കൃതലോകത്തിലേയ്ക്കു കടന്നുചെല്ലാം. അവിടെ എത്തിക്കഴിഞ്ഞാൽ ഭാഷ അനുദിനം അനായാസമായിത്തുടങ്ങുകയും ചെയ്യും.

## बालकाण्डः

पुरा विश्रवाः नाम कश्चिद् तापसः आसीत् । तस्य त्रयः पुत्राः अजायन्त । रावणः, कुम्भकर्णः विभीषणः इति । ते तपः चरित्वा ब्रह्माणं प्रत्यक्षीचक्रुः तस्मात् अभीष्टान् वरान् वव्रिरे च । रावणः मानुषान् तृणाय अगणयत् । ततः तस्य मनुष्यात् भयं नासीत् । तस्मात् तदितरैः देवादिभिः न वध्यः भवेयं इति वरं आयाचत । कुम्भकर्णः तु निर्देवत्वं ऐच्छत् । परंतु यदा स निर्देवत्वपदं उच्चचार, तदा तत् निद्रावत्त्वं इति परिणतम् । तस्मात् स निद्रामेव वरं लेभे । सत्त्वगुणप्रधानः विभीषणः तु विष्णुभक्तिं वृतवान् । ततः स विष्णुभक्तः संवृत्तः ।

रावणः वरलाभानन्तरं वैश्रवणं जित्वा तेन स्थापितं लङ्कापुरं पुष्पकविमानं च स्वायत्तं अकरोत्, तत्र ससुखं अवसत् च ।

तत् श्रुत्वा रसातलनिवासिनः राक्षसाः लङ्कां आगत्य रावणस्य आश्रिताः सन्तः निर्भयं अवसन् । रावणः मयसुतां मण्डोदरीं पर्यणयत् ! मेघनाद इति कश्चिद् पुत्रश्च तस्यां अजायत । रावणः भूमिं पातालं च विजित्य सर्वानपि जनान् अपीडयत् । ब्राह्मणानां वैदिकानि कर्माणि अदूषयत् च । ततः सः पुत्रेण सह स्वर्गम् गत्वा देवेन्द्रं अजयत् । तत्रत्यानि सर्वाण्यपि विशिष्टवस्तूनि लङ्कां आनयत् च । एवं सः त्रिलोकविजयी भूत्वा लङ्कायां विरराज ।

तस्मिन्नवसरे देवा ब्रह्मलोकं उपगम्य रावणस्य सर्वमपि विचेष्टितं ब्रह्मणे न्यवेदयन्। स तु देवैः सह क्षीरसागरं प्राप्य महाविष्णुं अस्तौषीत्। तदा विष्णुः प्रत्यक्षीभूय पितामहं अपृच्छत्। "हे ब्रह्मन्, किमर्थम् एतैः देवगणैः साकं त्वं आगतः असि" इति। तदा ब्रह्मा रावणात् जायमानां पीडां विष्णवे निवेदयामास। तत् श्रुत्वा विष्णुः धातारं एवं उवाच।

'हे ब्रह्मन् अलं भयेन। देवगणैः सह त्वं गच्छ। अहं दशरथस्य पुत्रः भविष्यामि, हनिष्यामि, च रावणम्। रावणवधे मम साहाय्यं कर्तुम् सर्वे सुराः भूमौ वानररूपिणः जायेरन्।' एवं उक्त्वा विष्णुस्तत्रएव अन्तर्दधे। विधाता सन्तुष्टो भूत्वा गीर्वाणैः समं प्रातिष्ठत च।

विष्णोः निर्देशमनुसृत्य देवेन्द्रः वालिनं नाम वानरं अजनयत्। सूर्यः सुग्रीवं मारुतः हनुमन्तं च अजनयताम्। ब्रह्मणः पुत्रः खलु जांबवान् ततः पूर्वमेव भूमौ जातः अभवत्। अन्ये अपि बहवः देवाः बहून् कपीन् अजनयत्। एवं बहवः देवांशसंभूताः वानराः भूमौ प्रवृद्धाः प्रहृष्टाः अवर्तन्त। तेषु बाली वानरसंघानां नेता अभवत्। स किष्किन्धायां वसतिं चक्रे।

तस्मिन् काले सूर्यवंशे दशरथः नाम कश्चिद् राजा आसीत। तस्य तिस्रः भार्याः आसन्। तासु सः कामपि सन्ततिं न लेभे। दुःखितः स राजा सुमन्त्रस्य निर्देशात् ऋश्यशृंगं मुनिं आनीय पुरोहितैः सह पुत्रकामेष्टिं आरेभे। तदा यागाग्नेः पायसं गृहीत्वा कश्चिद् उत्थितः। सः नृपं एवं उक्तवान्। "हे राजन्, एतत् पायसं पत्नीः प्राशय" इति। तत्कथनं अनुसृत्य राजा तत् पायसं पत्नीः प्राशयत्। पायसप्राशनात् एव ताः गर्भम् अधारयन्। कौसल्या रामचन्द्रं असूत। कैकेयी भरतं सुमित्रा तु लक्ष्मणशत्रुघ्नौ च। ते वपुषा मनसा च क्रमेण ववृधिरे, सकलासु विद्यासु नैपुण्यं च अलभन्त।

एकदा महामुनिः विश्वामित्रः तत्र आगच्छत्। सः 'यज्ञरक्षार्थम् रामं मया सार्धम् प्रेषय' इति दशरथं अयाचत। दशरथः दुःखितः अभूत्। तथापि गुरोः वसिष्ठस्य निर्देशात् सः लक्ष्मणेन सहितं रामं तस्य कौशिकस्य करे कृच्छ्रेण अर्पितवान्। रामलक्ष्मणौ विश्वामित्रं अन्वगच्छताम्। मध्येमार्गम् बला अतिबला इति मन्त्रद्वयं समग्राणि अस्त्राणि च मुनिः ताभ्यां उपदिदेश। रामः कौशिकेन प्रचोदितः सन् मार्गे ताटकां नाम राक्षसीं अवधीत्। कौशिकः ताभ्यां सह स्वकीयं सिद्धाश्रमं प्राप्य अध्वरं आरभत। तदा राक्षसाः तत्र आगताः। राघवः मारीचं नाम राक्षसं अस्त्रेः अर्णवे क्षिप्तवान्। सुबाहुप्रमुखान् अन्यान् बहून् राक्षसान् अवधीत् च। एवं यज्ञपालनं कृत्वा रामः सिद्धाश्रमं ररक्ष।

ततः विश्वामित्रः रामलक्ष्मणौ मिथिलां निनाय । मध्येपथं रामः अहल्यायाः शापमोक्षं चकार । मिथिलां प्राप्तो रामः जनकेन अर्चितः कौशिकस्य प्रचोदनेन तत्र विद्यमानं शैवं धनुः बभञ्ज । यः तद् धनुः आकुञ्चयेत् सः सीतां परिणेतुमर्हः इति जनकस्य समयः आसीत् । चापे भग्ने सति मिथिलाधिपः दशरथं रामस्य पितरं आनाययामास । जनकस्तु रामः लक्ष्मणः भरतः शत्रुघ्नः इति दशरथस्य चतुर्भ्यः पुत्रेभ्यः यथाक्रमं सीता, ऊर्मिला, माण्डवी श्रुतकीर्तिः इति चतस्रः कन्याः ददौ । एवं कृतपरिणयाः ते कुमाराः वधूभिः जनकेन च सह मिथिलायाः अयोध्यां प्रातिष्ठन्त । मार्गमध्ये परशुरामः स्वगुरोः परमशिवस्य चापभंगवार्तां श्रुत्वा क्रुद्धः अभ्यपतत् । रामः तं अपि विजित्य अयोध्यां प्राप ।

# अयोध्याकाण्डः

अत्रान्तरे भरतः शत्रुघ्नेन सह मातुलस्य युधाजितः गेहे गतः आसीत् । तदा अयोध्यायां दशरथः रामं यौवराज्ये अभिषेक्तुं आरभत । तत् श्रुत्वा मन्थरा नाम दासी भरतस्य मातरं कैकेयीं एवं प्रेरयामास । 'स्वपुत्रं भरतमेव युवराजं कर्तुम् यतस्व । तव भर्ता दशरथेन देवासुरयुद्धे तुभ्यं वरद्वयं दत्तमासीत् खलु । तद् अधुना याचस्व । एकेन वरेण रामस्य वनवासः कार्यः । अन्येन भरतस्य राजाधिकारश्च' इति । तथा मन्थरया प्रचोदिता कैकेयी महीपतिं वरद्वयं ययाचे । कैकेय्याः हितमादृत्य रामः वनवासाय निरयात् । निर्गतम् रामं सीता लक्ष्मणश्च अनुजग्मतुः । तथैव सर्वे पौराश्च तं अन्वगच्छन् । सुमन्त्रेण रथमारोप्य नीयमानः स राघवः गंगाकूले विद्यमानं शृङ्गिवेरपुरं प्राप । तत्र नाविकमुख्येन गुहेन सत्कृतः एकां निशां उवास । अनुगतान् सर्वानपि पौरान् परित्यज्य सः रामः सीतालक्ष्मणसंयुक्तः गुहेन आनीतया नावा गंगां समतरत् । गंगायाः पारं गत्वा भरद्वाजमुनिं सन्ददर्श । तेन सत्कृतः सः तस्यैव निर्देशात् चित्रकूटे जटावल्कलधारी सुखं अवसत् ।

सुमन्त्रः शृंगिवेरपुरात् प्रतिनिवृत्य अयोध्यां प्राप । सः कुमारस्य सर्वमपि वृत्तान्तं दशरथाय न्यवेदयत् । दशरथः तत् आकर्ण्य दुःखं असहमानः राम राम इति विलपन् देहं त्यक्त्वा दिवं गतः । द्रुतमेव वसिष्ठस्य निर्देशात् मन्त्रिणः भरतं मातुलालयात् आनाययामासुः । अयोध्यां आगतः भरतः स्वमातृनिमित्तमेव पितुः मरणं संजातमिति विज्ञाय नितरां अरूदत । अथ सः

शत्रुघ्नेन सह पितुः संस्कारादिकं यथाविधि चकार । मन्त्रिणः भरतं राज्यस्वीकरणाय प्रार्थयामासुः । सः तां अर्थनां न स्वीकृतवान् ।

अथ सः ज्येष्ठं वनात् प्रत्यानेतुं निश्चितवान्ः नागरिकैः सह वनं प्रतस्थे। चित्रकूटं गत्वा सः ज्येष्ठं ददर्श । चीरजटाधरं तं सः राज्याधिकारं स्वीकर्तुम् ययाचे ।तदा श्रीरामः एवं उवाच । "चतुर्दशवत्सरान् वने एवं जीविष्यामि, तदनन्तरं अहं अयोध्यां आगमिष्यामि" इति । भरतस्य अभ्यर्थनया स्वपादुके च स तस्मै अयच्छत्।एवं सान्त्वयित्वा रामःभरतंप्रतिनिवर्तयामास। भरतस्तु ज्येष्ठात् पादुके स्वीकृत्य अयोध्यां न जगाम । किन्तु नन्दिग्रामे स्थितः ते पादुके ज्येष्ठस्य प्रतिनिधी मन्वानः राज्यं बभार । रामस्तु तस्मात् चित्रकूटपर्वतात् अत्रेः आश्रमं गत्वा तं मुनिं अवन्दत । तस्य पत्नी अनसूया स्वैः भूषणैः सीतां अभूषयत् । तत्र एकां रात्रिं ते अनयन् । ततः सीतालक्ष्मणसंयुतः रामः दण्डकारण्यं विवेश ।

# आरण्यकाण्डः

पत्न्या अनुजेन च सह दण्डकारण्येन व्रजन्तं श्रीरामं विराधो नाम कश्चिद्राक्षसः हर्तुमगच्छत् । तं हत्वा सः शरभङ्गाश्रमं प्राप। सः महर्षिः श्रीरामदर्शनं कृत्वा देहं विसृज्य स्वर्गं प्राप । आश्रमवासिभिः मुनिभिः अभ्यर्थितः सः रामः राक्षसानां वधं प्रतिज्ञातवान् । तस्मान् आश्रमात् सः सुतीक्ष्णाश्रमं जगाम । तेन पूजितः सः पुनः सीतालक्ष्मणसमन्वितः अगस्त्याश्रमं प्राप्य तं ननाम। स महर्षिः रामाय वैष्णवं चापं ऐन्द्रं तूणीयुगं ब्राह्मं अस्त्रं खड्गं च ददौ । अगस्त्याश्रमात् स जटायुषः निकटं समाजगाम। ततः स पञ्चवटीं प्राप । तत्र लक्ष्मणः काञ्चन पर्णशालां निर्ममे । तस्यां सीतया लक्ष्मणेन च सहितः सः ससुखं उवास ।

एकदा शूर्पणखा नाम काचित राक्षसी अभ्येत्य रामं स्वभर्तृपदं स्वीकर्तुम् अभ्यर्थयामास । तेन सा निरस्ता बभूव । ततः लक्ष्मणं गत्वा स्वभर्तृपदस्वीकरणाय अभ्यर्थितवती। सोपि तां निराकरोत् । पुनरपि सा राममभ्यपतत् । तदानीमपि तेन निराकृता सा रुष्टा सीतां अभ्यद्रवत् । लक्ष्म
तस्या नासिकां श्रवण च अकृन्तत । तथा कृत्तश्रवणनासिका सा जनस्थानं गत्वा स्वामवस्थां खराय न्यवेदयत । तदा खरः क्रोधाकुलः सन् दूषणत्रिशिरोमुख्यैः यातुधानैः समन्वितः राघवं हन्तुम् अभ्यगच्छत । रामः तत

क्षणमेव सीतायाः संरक्षणाय लक्ष्मणं नियुज्य खरादिभिः सह अयुध्यत । तस्मिन् युद्धे खरादयः सर्वे हताः । ततः शोकाकुला शूर्पणखा लङ्कां गत्वा रावणाय आदितः प्रभृतिः सर्वम् वृतान्तं न्यवेदयत् । रावणस्तु तत्श्रुत्वा सीतां हर्तुं मतिं अकरोत् । सः मारीचाश्रमं प्राप्य स्वसाहाय्यार्थम् तं अचोदयत् । मारीचः स्वर्णमृगस्य आकृतिं स्वीकृत्य सीतायाः प्रमुखे अचरत् । सीता तु तं मृगं आहर्तुम् भर्तारं अयाचत ।

श्रीरामः सीतां रक्षितुं लक्ष्मणं नियुज्य मृगं अन्वगच्छत् । मृगस्तु काननान्तरे इतस्ततः धावितुमारभत । रामः अन्ते मृगं बाणेन विव्याध ।मारीचस्तु आसन्नमरणः निजं रूपमास्थाय 'हा सीते, हा लक्ष्मण' इति रामशब्देन रुदन् प्राणान् अत्यजत् । तत् रोदनमाकर्ण्य वैदेही भर्तुः अपायमाशङ्कमाना तं रक्षितुं लक्ष्मणं असकृत् चोदयामास । लक्ष्मणः तस्याः निर्बधं निराकर्तुं अक्षम तस्याः रक्षायै देवता। प्रार्थ्य राघवान्तिकं प्रययौ । एवं पर्णशालायां सीता एकाकिनी बभूव । तस्मिन्नवसरे रावणः यतिरूपं धृत्वा आगत्य सीतां अपहृत्य पुष्पकविमानमारोप्य आकाशमार्गेण ययौ ।मध्येमार्गं जटायुः नाम विहगः आपत त रावणेन सह तुण्डपक्षनखैः अयुध्यत च । रावणः चन्द्रहासेन प्रहृत्य तं भूमौ पातयामास । ततः निर्विघ्नं सः राक्षसराजः सीतासहितः लङ्कां प्राप सीतायाः निवासाय अशोकवनिकामध्ये रावणः सर्वम् अपि संविधानं अकरोत् । तस्याः आश्वासनाय निशाचरीः च न्ययुक्त ।

रामस्तु अत्र पञ्चवट्यां मारीचवधं कृत्वा निवर्तमानः लक्ष्मणेन कथितां वार्तां श्रुत्वा विषण्णः पर्णशालां उपाजगाम । सः तत्र सीतां न ददर्श । वनान्तरे अनुजेन सह तां विचिन्वानः सः छिन्नपक्षं जटायुषं ददर्श । जटायुः सीतायाः अपहरणं रावणकृतं अकथयत् । सद्य एव च प्राणानमुञ्चत् । रामः पितुः प्रियस्य तस्य उदकक्रियां चक्रे ।

ततः तौ वने इतस्ततः विलपन्तौ अचरतां । मध्येपथं अभिभवन्ती अयोमुखीं नाम राक्षसीं लक्ष्मणः कृत्तश्रवणनासिका चकार । ततः कबन्धो नाम राक्षसः तौ हठात् अगृह्णात् । तस्य भुजौ तौ न्यकृन्तताम् । रामात् लब्धमोक्षः विद्याधररूपधारी सः स्वदेहं संस्कर्तुम् अयाचत । तौ तथैव च चक्रतुः । सीतायाः उपलब्धये ऋश्यमूके वसन्तं सुग्रीवं उपगच्छ इति रामं उक्त्वा सः विद्याधरः स्वर्गं जगाम । ततः सन्तुष्टः राघवः शबर्याश्रमं अभिजगाम । तया अभ्यर्चितः सः लक्ष्मणेन सह पम्पां प्राप ।

---

# किष्किन्धाकाण्डः

अत्रान्तरे सुग्रीवः स्वज्येष्ठात् वालिनो भीतः ऋश्यमूकाचले वसन्नासीत् । तदा रामलक्ष्मणयोः परिचयमाधातुं हनुमन्तं निर्दिदेश । तेन च निर्दिष्टः हनूमान् रामलक्ष्मणौ सुग्रीवसमीपं आनयत् । सीतापहरणवृत्तान्तं निवेद्य सः रामसुग्रीवयोः सख्यं अग्निसन्निधौ कारयामास । रामः वालिवधं प्रतिजज्ञे । सुग्रीवस्तु, वैदेहीं अन्विष्य दर्शयिष्यामि इति स प्रतिज्ञातवान् । अथ सुग्रीवः स्वभ्रातुः वैरस्यकारणं रामाय न्यवेदयत् । रामः स्वशक्तौ विश्वासं जनयितुं सुग्रीवेण प्रदर्शितं दुन्दुभेः कायं पादाङ्गुष्ठेन सुदूरं उदक्षिपत् ।

ततः सुग्रीवेणैव दर्शितान् सप्तसालान् राघवः एकेन बाणेन चिच्छेद । अथ रामस्य शक्तौ जातप्रत्ययः सुग्रीवः तेन सह किष्किन्धां प्राप्य जगर्ज । तत् गर्जनं वालिनं अकोपयत् । द्रुतमेव वाली स्वगृहात् निष्क्रम्य सुग्रीवं अभ्ययुध्यत । सुग्रीवः भग्नसर्वाङ्गः सन् राघवान्तिकं प्राद्रवत् । तदा रामः प्रत्यभिज्ञानार्थम् सुग्रीवाय काञ्चन मालां ददाति स्म । सुग्रीवः विश्वाससमापन्नः पुनरपि वालिनं रणाय आह्वयत । रामस्तु वृक्षान्तरे तिरोहितश्च तस्थौ ।

रणाह्वानं श्रुत्वा वाली स्वगृहतः निश्चक्राम । तस्य पत्नी तारा 'युद्धाय मा गच्छ' इति भर्तारं न्यरुणत् । तस्या वचनं निराकृत्य स वाली भ्रात्रा सुग्रीवेण सह दारुणं रणमकरोत् । तुमुले युद्धे वृक्षान्तर्हितः रामः शरेण वालिनं विव्याध । वाली तु वेद्धारं रामं ज्ञात्वा सन्तुष्टः सन् देहं त्यक्त्वा स्वर्गम् प्राप ।

ततः राघवः सुग्रीवं वानराणां आधिपत्ये अभ्यषिञ्चत् । ततः माल्यवन्-पर्वतस्य उपत्यकासु रामः लक्ष्मणेन सहितः चतुरः मासान् सीताविरहार्तः अनयत् । तदा रामस्य निर्देशं स्वीकृत्य लक्ष्मणः हनूमत्प्रभृतिभिः प्लवगैः सार्धम् तं माल्यवन्तं पर्वतं आनयत् । तत्र विरहार्तम् राघवं सुग्रीवः ददर्श । तद्वचनं स्वीकृत्य सुग्रीवः बहून् वानरान् सीतां अन्वेष्टुं चतसृष्वपि आशासु प्रेषयामास । तेषां प्रस्थानकाले रामः हनूमन्तं आहूय तस्मै स्वं अंगुलीयकं ददौ । वैदेह्याः विश्वासकारणं तत् आदाय स मारुतिः अन्यैः बहुभिः वानरैः सह दक्षिणां दिशं ययौ । ते सीतां विचिन्वानाः विन्ध्यपर्वतं आवापुः । सीतायाः वार्ताम् निश्चितसमयेन अलभमानाः ते तस्मिन् पर्वते प्रायोपवेशनं चक्रुः ।

तदा सम्पातिर्नाम खगः तत्र आगतः । तस्मात् ते वानराः सीतावार्ताम् शुश्रुवुः । तां वार्ताम् आकर्ण्य अंगदाद्याः प्लवंगमाः दक्षिणसमुद्रतीरं प्रापुः ।

मुद्रमुल्लंघ्य लङ्कां गन्तुं तेषु कश्चिदपि शक्तः न अभवत्। तदा जांबवतः प्रशंसाभिः संवर्धितवीर्यः हनूमान् समुद्रोल्लंघनाय महेन्द्राद्रिं आरुरोह।

# सुन्दरकाण्डः

महेन्द्रपर्वतस्य अधित्यकां आरूढः सः पवनात्मजः सर्वान् गुरून् देवान् च अभिवन्द्य अर्णवं विलंघयितुं तस्मात् पर्वतात् उदप्लुवत। मध्येमार्गम् अभ्युद्गत मैनाकं अत्यलंघयत्। सुरसा नाम नागमाता तस्य शक्तिं परीक्षितुं आकाशे अभ्यपतत्। परीक्षणे विजयी सः कपिः तां च अवन्दत। विद्रोहाय अभिपतितां सिंहिकां नाम राक्षसीं अवधीत्। एवं सः महोदधेः पारे स्थितां लङ्कां प्राप।

लङ्कायाः द्वारे लङ्कालक्ष्मीः अदृश्यत। तां विजित्य लङ्काराजधानीं पवनात्मजः प्राविशत्। स रात्रौ लङ्कायां इतस्ततः सीतां विचिन्वन् सञ्चचार। एकत्र निद्राणं रावणं सः अपश्यत्। तत्र वैदेही न दृष्टा। पुनरपि तत्र तत्र विचिन्वानः अशोकवनिकां प्राप। तत्र सः दुःखितां सीतां ददर्श। सः वानरः पादपं आरुह्य तत्पत्रैः समावृतः सन् आस्त।

तस्मिन्नवसरे रावणः तत्र समागतः। सः सीतां एवं अभ्यर्थितवान्। "हे मैथिलि, त्वं मम भार्या भूत्वा चिरं सुखं वर्तस्व" इति। तदा सीता उवाच। "अहं त्वत्पत्नी न कदापि भविष्यामि" इति। तत् श्रुत्वा कामक्रोधविवशः स रावणः स्वगृहं न्यवर्तत।

तं अवकाशं लब्ध्वा हनूमान् सीतायाः समीपमागतः अंगुलीयकं दत्त्वा रामस्य वृत्तान्तं अकथयत् च। वैदेही तु अंगुलीयकं प्रतिजग्राह स्वं चूडामणिं रामस्य प्रत्यभिज्ञानार्थम् तस्मै च दत्तवती। हनुमान् तां एवं समाश्वासयामास।

"हे देवि, मा विषादं कृथाः। राघवः अचिरेणैव रावणं रणे हनिष्यति त्वां च प्रत्यानेष्यति।"

इत्युक्त्वा सः ततो विनिर्ययौ। निवर्तनावसरे तत्रत्य उपवनं स बभञ्ज। अक्षादीन् बहून् राक्षसान् सः युद्धे अवधीत् च। तदा इन्द्रजित् तेन सह अभियोद्धुमागतः। तेन स कपिः अबध्यत। रावणस्य समक्षं इन्द्रजिता समानीतः सः श्रीरामस्य वार्तां तस्मै न्यवेदयत्। रावणः क्रुद्धः सन् तस्य लांगूलं दीपयितुं आज्ञापयत्।

अग्निना प्रदीप्तलांगूलः स तत्र तत्र उत्प्लुत्य लङ्कां अशेषतः अदहत् । ततः समुद्रजले लांगूलं निमज्य अग्निं निर्वाप्य सागरं उत्ततार । एवं लङ्कायाः प्रतिनिवृत्तः स वानराणां अन्तिकं आगच्छत् । ततः वानरैः सह श्रीरामन्तिकं गत्वा तस्मै सर्वमपि वृत्तान्तं न्यवेदयत् । सीतया दत्तां चूडामणीं च ददौ ।

# युद्धकाण्डः

अथ रावणविजयाय राघवः असंख्यैः सुग्रीवप्रमुखैः कपिगणैः सह माल्यवतः पर्वतात् प्रातिष्ठत । अचिरेण स महोदधेः तीरं प्राप । तदा विभीषणः तं उपागच्छत् । सः भ्रात्रा रावणेन निष्कासितः आसीत् । आश्रितवत्सलः रामः तं लङ्काराज्ये अभ्यषिञ्चत् । लङ्कां प्राप्तुं विभीषणेनैव मार्गः निर्दिष्टः । नलो नाम वानरः अन्येषां बहूनां कपीनां साहाय्येन सेतुं बबन्ध । तेन सेतुना समुद्रं तीर्त्वा रामः वानरसैन्येन सह सुवेलं नाम पर्वतं प्राप ।

ततः राघवनिर्दिष्टा नीलप्रभृतयः प्लवगा वृक्षान् पाषाणान् च पाणिभ्यादाय लङ्कां सर्वतो रुरुधुः । स्वपुरीं वानरैः निरुद्धां ज्ञात्वा रावणो युद्धाय राक्षसान् नियुयोज । तेषु प्रमुखान् प्रहस्तादीन् हत्वा वानराः उच्चैः सिंहनादं वितेनुः । सुग्रीवः, हनुमान्, राघवः, लक्ष्मणः च एकैकशः राक्षसैः सह युद्धमकुर्वन् । बहवः राक्षसाः हताश्च ।

तदा मेघनादः क्रुद्धः युद्धक्षेत्रं अभ्यपतत् । स रामलक्ष्मणौ नागपाशेन बबन्ध । तदा गरुड आगत्य तौ अमोचयत् ।

अन्ते रावणः अभिपपात । स श्रीरामेण पराजितः अभवत् । तदा स प्रतिनिवृत्य कुंभकर्णम् प्रबोध्य रामवधाय न्ययुंक्त । कुंभकर्णः अग्रे दृष्टान् वानरान् भक्षयन् रणाङ्गणं जगाम । रामः तं ऐन्द्रास्त्रेण हतवान् ।

कनिष्ठस्य मरणं श्रुत्वा दुःखितः रावणः देवान्तकनरान्तकौ युद्धाय प्रेषयामास । हनूमता अंगदेन च द्वावपि तौ राक्षसौ निहतौ । अथ अतिकायः नाम राक्षसः अभ्यपतत् । स वानरसेनां अतितरां अपिडयत् । तं अपि लक्ष्मणः अवधीत् ।

एवं सर्वेष्वपि निहतेषु रावणः इन्द्रजितं युद्धाय नियुयोज । स रामलक्ष्मणौ ब्रह्मास्त्रेण बद्धवान्, बहून् वानरान् च शरैः अवधीत् । तदा वानराः नितरां अदूयन्त । जांबवान् मृतसञ्जीवनी ओषधिं आनेतुं मारुतीं चोदयामास ।

झटित्येव हनूमान् ओषधिपर्वतं अभिप्लुतः । किन्तु स तत्र ओषधिं न दृष्टवान् । तस्माद् स तं पर्वतमेव समुत्पाट्य द्रुतं रणाङ्गणं प्रतिन्यवर्तत । ओषधेः गन्धमाघ्रायैव राघवादयः सर्वे अपि प्राणान् प्रत्युपलेभिरे ।

प्राणान् लब्धवद्भिः कपिभिः पुनरपि भग्नां लङ्कां वीक्ष्य रावणस्य क्रोधः वितरां अवर्धत । ततः कुंभकर्णस्य पुत्रौ कुंभनिकुंभौ रामलक्ष्मणौ हन्तुं नियुक्तौ । तयोः कुंभं रामः, निकुंभं लक्ष्मणः च जघ्नतुः । रावणपक्षे एवं प्रायेण सर्वे अपि निहताः ।

अवशिष्टेषु राक्षसेषु खरात्मजं आहूय रावणः युद्धाय प्रेषयामास । तं राघवः जघान । रावणस्य दुःखं क्रोधश्च अवर्धत । सः इन्द्रजितं पुनरपि युद्धाय प्रचोदयामास । पराक्रमी इन्द्रजित् झटित्येव स्वगृहात् निर्ययौ । सः मायासीतां सर्वेषु वानरेषु पश्यत्सु खड्गेन जघान।तदा सर्वे वानराः दुःखार्ताः युद्धात् विरेमुः । हनूमान् तत्क्षणमेव रामस्य अन्तिकं अधावत् । इन्द्रजिता कृतं सीतावधं हनूमतः श्रुत्वा रामः मोहं अवाप ।

तदा विभीषणः तत्र आगतः । तत्र मूर्च्छितं रामं विषण्णान् वानरान् च दृष्ट्वा तान् एवं सान्त्वयामास ।

'हे प्रभो, लोकनाथ' विषादेन अलं । मया सर्वमपि अवगतं । इन्द्रजिता मायासीता विरचिता, सैव तेन हता । तेन अधुना निकुंभिलाख्ये स्थलविशेषे होमं कर्तुम् गतः । अधुनैव त्वं लक्ष्मणं तत्र प्रेषय । अहमपि मन्त्रिभिः सह तं अनुगच्छामि । यदि होमः निर्विघ्नः समाप्यते तर्हि अस्माकं शत्रवः अजय्या भविष्यन्ति ।"

तत् श्रुत्वा रामः विभीषणेन सह इन्द्रजितमभिगन्तुं सौमित्रिं आज्ञापयामास । लक्ष्मणस्तु रामं आमन्त्र्य विभीषणेन सह इन्द्रजित्सनाथां निकुंभिलां प्राप ।विभीषणः स्वभ्रातृपुत्रं मेघनादं अदर्शयत् । लक्ष्मणः तत्र स्थितान् सर्वानपि राक्षसान् शरसञ्चयैः चिच्छेद । तत्र अतिघोरं युद्धं अवर्तत । अन्ते सौमित्रिः ऐन्द्रास्त्रेण मेघनादस्य शिरः चिच्छेद ।

रावणः पुत्रवधवृत्तान्तं शुश्राव । तस्य धैर्यम् नष्टं, अंगानि च विह्वलानि अभवन् । शोकार्तः सन् एवं विलपितुमारेभे ।

"हा पुत्र मम जन्म अधुना निरर्थकं अभूत् । त्वां रणाङ्गणे मृतं द्रष्टुं नाहं शक्नोमि । हे शूर, निस्सारेण मानुषेण त्वं हत इति कष्टमेव । स च केवलं मानुषः राज्यात् भ्रष्टः दीनश्च वर्तते ।तेन इन्द्रजित् त्वं अहन्यथाः। एतां

वार्तां कथमहं विश्वसिमि । त्वं इन्द्रं जित्वा तं लङ्कां आनीय कारागृहवासिनं अकरोः । ब्रह्मणा अभ्यर्थितः सन् त्वं तमिन्द्रं मुमोचिथ । तादृक्प्रतापी त्वं मां परित्यज्य अधुना कुत्र गतोसि । हे पुत्र, किमहं करिष्यामि । क्व वा अहं गमिष्यामि । यत्र त्वं वससि तत्र मां अपि नय । त्वत्समः त्रिषु लोकेषु न कश्चिदपि अस्ति । तादृशस्य लोकैकवीरस्य पिता अहमिति गर्वितोऽहं अधुना तव दुर्दशां दृष्ट्वा नितरां दूये । धूम्राक्षः वज्रदंष्ट्रः प्रहस्तः कुम्भकर्णः इत्यादयः प्रतापशालिनः सर्वेऽपि निहताः । अधुना मया किं करणीयम् ? क्व गन्तास्मि ?।

इत्येवं रावणः बहुधा विललाप । क्रमेण तद्दुःखं क्रोधरूपं प्राप । सः अज्ञापयामास ।

"हे सूत, अहं विजिगीषुरस्मि । त्वरितं रथमानय । अहं अधुनैव रामं लक्ष्मणं च हन्तुं निर्गमिष्यामि ।" एवं उक्त्वा रावणः रथमारुह्य रणक्षेत्रं गत्वा रामेण सह युद्धं आरेभे ।तदा मातलिना आनीतं ऐन्द्रं रथं आरुह्य रामः अपि युद्धक्षेत्रं अभ्पतत् । अथ रामरावणयोः युद्धं तुमुलं अभवत् ।

देवाः उत्कण्ठिताः आकाशे स्थित्वा तत् युद्धं ऐक्षन्त । अथ अगस्त्यवचनं स्मृत्वा रामः ब्रह्मास्त्रेण रावणं जघान । मण्डोदरी द्रुतमेव भर्तृमरणवार्तां आकर्णयत् । सा रणाङ्कणमागत्य भृशं विललाप । रामस्य निर्देशात् अवशिष्टैः राक्षसैः सह विभीषणः रावणस्य संस्कारादिकं यथाविधि चकार।

एवं धरित्री निष्कण्टका जाता । प्रशान्तायां लङ्कायां अवसिते रणे अशोकवनिकां गत्वा रामः सीतां अद्राक्षीत् । सा परिशुद्धेति अग्निना प्रतिज्ञातम् । देववृन्दैः अनुज्ञातः रामः तां स्वीचकार । तस्मिन्नवसरे दशरथः अपि स्वर्गादवतीर्य तत्र सन्निहितः आसीत् । देवाः रामं एव तुष्टुवुः ।

"हे राम, त्वमेव लोकत्रयभयङ्करं इदं कर्म कर्तुम् प्रभवसि । इयं सीता साक्षात् लक्ष्मीः, भवान् साक्षात् विष्णुश्च ।"

एतादृशैः स्तवैः तथ्यकथनैश्च रामस्य सीताविषयां आशङ्कां ते अपनिन्युः । ततः श्रीरामः स्वकनिष्ठेन लक्ष्मणेन विभीषणस्य लङ्काराज्ये अभिषेकं कारयामास । एवं लङ्कां निष्कण्टकां मंगलमयीं च कृत्वा भार्यया कनिष्ठेन च सह पुष्पकं विमानमारुह्य किष्किन्धां प्राप । तदा किष्किन्धावासिन्यः सर्वाः वानरस्त्रियः सीतादर्शनकौतूहलेन तं पुष्पकविमानं अभ्यागच्छन् ।

अनन्तरं दाशरथिः भरद्वाजाश्रमं प्राप। ततः रामः मारुतिं भरतस्यान्तिकं प्रेषयामास। सः तत्र रामस्य दर्शनात् वह्निं प्रविविक्षुः आसीत्। वह्निप्रवेशनात् प्रागेव मारुतिः भरतं उपजगाम। रामोऽपि भरद्वाजसत्कारस्वीकारानन्तरं भरतमुपगतः। सन्तुष्टेन भरतेन सह ते अयोध्यां प्राविशन्। अयोध्यावासिनस्तु वयं धन्याः स्मः इति वदन्तः सन्तुष्टाः रामं अभिजग्मुः। तान् कुमारान् दृष्ट्वा हर्षाकुलाः मातरः तेषां समीपमागत्य तान् प्रियसुतान् आशिश्लिषुः।

अथ वसिष्ठाद्याः महर्षयः मन्त्रिभिः सह समालोच्य रामस्य अभिषेकं चक्रुः। तस्मिन् अभिषेकोत्सवे सुग्रीवप्रमुखाः वानराः मालाभिः गन्धद्रव्यैः अंबरैः भूषणैश्च यथार्हं सम्मानिताः। विशिष्य हनूमान् सीतया मुक्ताहारेण सम्मानितः। तत्र सम्मिलिताः सर्वाः वानरीः कौसल्या वस्त्रैः चन्दनैः कुङ्कुमैः भूषणैः च भूषयामास। अभिषेकोत्सवस्य अन्ते रामाज्ञया सर्वेऽपि कपयः किष्किन्धां प्रतिन्यवर्तन्त। अथ च युद्धे सर्वम् साहाय्यम् कृतवन्तं विभीषणमपि लङ्कागमनाय अनुजज्ञे। रामः पितुः सिंहासनं प्राप्य भ्रातृभिः सहितः पूर्वाधिकं विरराज। अथ लक्ष्मणस्य अनुमत्या रामः स्वप्राणेभ्यः प्रियतराय भरताय यौवराज्यं दत्तवान्। एवं ते चत्वारः महात्मानः सभार्याः अयोध्याराजधान्यां उत्तरोत्तरं अभिवृद्धिं प्रापुः।

---

# उत्तरकाण्डः

रामे एवं स्वैरं साम्राज्यं शासति सति कश्चिद् जनापवादः अश्रूयत। "रावणेन दूषितां भार्यां राजा रामः पर्यग्रहीत्" इति। प्रजाहितं परिगणयन् सः राजा गर्भिणीमपि मैथिलीं कानने तत्याज। गंगातटे काननान्तरेषु विलपन्तीं एकाकिनीं तां महर्षिः वाल्मीकिः ददर्श। सः तां आश्रमं अनैषीत्। तादृशीं अनाथां तां समाश्वास्य सः तत्रैव अवासयत्। सीता लवकुशनामकौ सुतौ असूत।

तत्रान्तरे केचन मुनयः लवणात् उद्भूतां पीडां राघवाय निवेदयामासुः। राघवाज्ञया शत्रुघ्नः लवणं निहत्य तान् मुनीन् अपालयत्।

ततः रामः स्वर्णमयीं सीतां पत्न्याः स्थाने परिकल्प्य यज्ञं विततान । यागमन्तरा वाल्मीकिः सुताभ्यां सह सीतां आनीय तस्मै ददौ । पुनरपि रामस्य शङ्कया निर्विण्णा सा जानकी 'भगवति वसुन्धरे, देहि मे विवरं' इति प्रार्थ्य विललाप । तदा धरित्री तां स्वीचकार ।

एवं भूमावन्तर्धानम् गतायां सीतायां रामस्य निर्देशात् सर्वेऽपि वानराः पौरैः सह सरयूतीर्थे निमज्य देहं त्यक्त्वा दिवं प्रापुः । ततः भरतः शत्रुघ्नः च स्वं स्वं पूर्वरूपं अवापतुः । श्रीरामोऽपि तथैव मानुषं देहं परित्यज्य वैकुण्ठं धाम प्रविवेश ।

यस्तु दाशरथिर्भूत्वा रणे हत्वा च रावणम् ।
ररक्ष लोकान् वैकुण्ठः स मां रक्षतु चिन्मयः ॥

(ശ്രീരാമോദന്തമെന്ന കാവ്യത്തെ അവലംബിച്ചെഴുതിയതു്)

---

**അഭ്യാസം**

1 ആരണ്യകാണ്ഡത്തിലെ കഥ മലയാളത്തിൽ ചുരുക്കിയെഴുതുക.

2 ഓരോരുത്തരെപ്പററി സംസ്കൃതത്തിൽ ഓരോ ചെറുകുറിപ്പെഴുതുക.
1 സുഗ്രീവൻ 2 ഹനുമാൻ 3 കുംഭകർണ്ണൻ 4 സീത.

3 താഴെ കൊടുക്കുന്ന ക്രിയകളുപയോഗിച്ചു് ഓരോ വാക്യമെഴുതുക:

1 आश्वासयामास । 2 अवर्धत । 3 चकार । 4 प्रापुः । 5 प्रविवेश ।

4 രാമരാവണയുദ്ധം സംസ്കൃതത്തിൽ ചുരുക്കി എഴുതുക.

---

# एकविंशो दिवसः

ह्यः पठितानां पञ्चानां पद्यानां सारं संक्षेपतः कथयित्वैव अद्यतनस्य पाठस्यारंभः समुचित इति मन्ये ।

रघोः दिग्विजयार्थं गजादीनां सेनांगानां अत्युत्साह आक्रमणशक्तिश्च समजायेतां इति आद्येन पद्येन वर्ण्यते ।

शरदागमने एव सप्तपर्णाः कुसुमिताः भवन्ति । तेषां कुसुमानि गजानां मदजलानीव सुरभिलानि च संपद्यन्ते । तेन सुगन्धिर्वायुः अन्तरिक्षे प्रसरति । तेषामेव सप्तपर्णानां प्रकाण्डेषु सैन्यगजाः शृंखलिता वर्तन्ते । ते गजाः सप्तपर्णकुसुमसुरभिलेन वायुना आहताः भवन्ति । तेन वायुना आहन्यमानाः ते गजाः स्पर्धालवश्च जायन्ते । तेषां कीदृशी स्पर्धा आसीत् ? अहो, अयं सप्तपर्णो वृक्षः एकस्मिन् पत्रे सप्तपर्णानि अथवा सप्तधा विभिन्नानि दलानि सन्तीत्यनेन तस्य सप्तपर्ण इति संज्ञा संजाता । गजाः एवं विचिन्तयन्ति । "एते सप्तपर्णाः अस्मान् गन्धेन तिरस्कुर्वन्ति । तर्हि वयमपि तान् गन्धेनैव प्रहराम । ते सप्तपर्णाः खलु । वयमपि सप्तभिर्द्वारैः मदजलं प्रवाहयेम ।" इति विचिन्तयन्त इव ते गजाः सप्तपर्णपुष्पसुरभिलं मदजलं सप्तभि स्रावयन्ति स्म । गजानां मदजलं सप्तभिः द्वारैः प्रवहतीति गजशास्त्रे प्रसिद्धम् । शुण्डाद्वाराभ्यां मस्तकपार्श्वाभ्यां नेत्राभ्यां लिङ्गाच्च ।

अथ तृतीयं पद्यं विव्रियते । यदि विजिगीषया प्रस्थितस्य कस्यचित् राज्ञः मध्येमार्गम् नद्यः सलिलपूर्णाः स्युः तर्हि तासां तरणाय स न शक्नुयात् । तस्माद् राजानः न खलु वर्षासु जलयात्रोत्सुकाः भवन्ति । अधुना तु शरत्कालः समायातः । नद्यः अल्पजलाः गाधाश्चाभवन् । एवमेव यदि मार्गाश्च पङ्किला भवेयुः तर्हि ससैन्यस्य तस्य गमनं दुष्करं स्यात् । यथा अधुनातने काले भारते पन्थानः दृश्यन्ते, तथा रघोः काले सुदीर्घाः राजपथाः नासन् । अधुना तु आसेतुहिमाचलं वाहनगतागतयोग्याः पन्थानः सन्ति खलु । यथाऽधुना तथा तस्मिन् काले न सरितां सेतवः अविद्यन्त । न च पर्वतपंक्तयः सुचराश्चाभवन् । एवं तस्मिन् काले वर्षासु पन्थानः पङ्किला एवाविद्यन्त । शरदृतौ

आयाते, ते मार्गाः क्रमशः शुष्कपङ्का अजायन्त। एवं तस्य रघोः मार्गान् यात्रार्थं सज्जीकुर्वाणा सा शरत् सर्वेभ्योऽपि प्रथमतः रघुं दिग्विजयार्थं प्रेरयामास।

प्रायशः तिस्रः शक्तयः नृपान् दिग्विजयाय प्रेरयन्ति; प्रभुशक्तिः मन्त्रशक्तिः, उत्साहशक्तिश्चेति। लब्धप्रतिष्ठस्य सैन्यसम्पत्समृद्धस्य प्रभोः शक्तिरेव प्रभुशक्तिः। सचिवादीनां नयोपायोपदेशविचक्षणानां शक्तिरेव मन्त्रशक्तिः। एतस्मात् प्रभुमन्त्रशक्तिद्वयात् अतिरिक्ताशक्तिरेवोत्साहशक्तिः। सा शक्तिस्तु केवलं धैर्यादुल्लासाच्च संजायते। एतत् शक्तित्रयमेव राज्ञः दिग्जयाय प्रेरयति। अत्र तु तदतिरिक्तां प्रेरणां प्रथमतः शरद् तस्मै अदादिति भावः।

अथ तृतीयं पद्यं विवृणोमि। दिग्विजययात्रायाः पूर्वमेव गजतुरगादिकान् पुरोहिताः नीराजयन्ति। कस्मिंश्चित् स्थालीविशेषे दूर्वायवांकुरादिकानि मंगलद्रव्याणि निधाय हुतवहं प्रज्वाल्य धूपैः दीपैः मंत्रोच्चारणपूर्वकं पुरोहितैः क्रियमाणं मण्डलरीत्या भ्रमणमेव नीराजनम् नाम। उत्तर भारतेषु आरती केरलेषु दीपाराधना च नीराजनायाः प्रकारान्तराणि। एवं नीराजनायां पुरोहितैः क्रियमाणायां, हुतभुजो ज्वाला प्रदक्षिणं जज्वाल। तथा प्रदक्षिणेन ज्वलन्त्याः ज्वालायाः भ्रमणं कविरुत्प्रेक्षते; अग्निः स्वयं प्रसन्नो भूत्वा रघवे स्वहस्तेनैव जयं दत्तवानिति।

अथ चतुर्थेन श्लोकेन रघोः प्रस्थानमाह। यदा रघुः दिग्जयाय बहिर्गच्छति तदा मूलनगरं अनाथं भवति। ततः तत्संरक्षणार्थं प्रथमत एव सर्वमपि सज्जीकरणं कृतम्। अथ स्वस्यासान्निध्ये समीपस्थाः राजानः अक्राम्येयुः इति मत्वा रघुणा [illegible] राज्यस्य प्रान्तप्रदेशानां च संरक्षणार्थं संविधाः कृताः। अभिमुखमापततः नृपान् जित्वा जित्वा रघुः पुरोगच्छति। 'तदा विजितपूर्वाः पश्चात्कृताश्च नृपाः कदाचित् पश्चाद्भागात् आक्रमणं कुर्युः" एवं विचिन्त्य तेषामाक्रमणोद्यमं असाध्यं कृत्वा पार्ष्णिभाग च निष्कण्टकमकरोत्। एवं सर्वेषामपि संरक्षणार्थं सर्वाण्यपि सज्जीकरणानि कृत्वा विजय लाभार्थं ब्राह्मणपूजान्नदानादिकान् मंगलविधीन् विधाय स प्रस्थितवान्। तस्य सैन्य षड्विधमासीत्। षड्विधं सैन्यं तु "मौलं, भृत्यः, सुहृद्, श्रेणी, द्विषद्, आटविकं, बलं" इति कोशे दृश्यते। (मौलं = मूल (केन्द्र) सम्बन्धि)

ता रघुः राजगृहात् निष्क्रम्य गोपुरद्वारमतीत्य मुख्यरथ्यां प्रविशति स्म। सर्वे पौराः सर्वा पौर्यश्च तदा मंगलकर्माण्याचेरुः। तेष्वतिगौरवात् वृद्ध-योषितां आशिराचरणानि अत्र कथ्यते। पुरा देवा असुराश्च क्षीरोदधिं अमथ्नन् इति कथा प्रसिद्धा खलु। तदा मन्दरपर्वतस्य घर्षणेन अथवा भ्रमणेन पयःकणिका अवाकीर्यन्तः। ताः सर्वतःशुभ्राः क्षीरसागरवीचयः तान्पयः-कणान् महाविष्णोरुपरि विकिरन्ति स्म। तद्वत् अत्रापि शुभ्रवसनाः शुभ्र-स्मिताः शुभ्रकेशिन्यश्च ताः वृद्धयोषितः रघोः शिरसि लाजानवाकिरन्।

---

अथ अद्य पठितुं निर्धारितं पद्यपञ्चकं व्याख्यायते। अस्माकं महाराजो रघुरधुना प्रथमत एव प्राचीं दिशं गच्छति। पाठारंभात् प्रागेव रघोः मार्गस्य परिचयः दीयते। रघुर्येन येन मार्गेण दिग्विजयाय गतवान् स स मार्गः परिचीयताम्।

प्रथमं स अयोध्यानगरात् (अधुना तु तत् नगरं उत्तरप्रदेशे अन्तर्भवति) प्राचीं दिशं जगाम। ततः वंगदेशं गत्वा तत्रत्यान् नृपान् विजित्य उत्कलदेशेन (उडिया) कलिङ्गान् (आन्ध्र) प्राप्य तत्रत्यं महेन्द्रनाथं जित्वा दाक्षिणात्यान् पाण्ड्यान् केरलान् च विजित्य अपरान्तप्रदेशेन (पश्चिमसमुद्र तीरप्रदेशेन) गत्वा पारसीकान् विजित्य हिमाचलमारुह्य तदन्तर्गतान् नृपानुन्मूल्य नेपाल-मार्गेणावतीर्य अयोध्यां न्यवर्तत। प्रथमतः प्राचीं दिशं प्रति यात्रां वर्णयति।

28 स ययौ प्रथमं प्राचीं तुल्यः प्राचीनबर्हिषा

अहितान अनिलोद्धूतैः तर्जयन्निव केतुभिः॥

पदच्छेदः—अहितान् अनिलोद्धूतैः तर्जयन् इव।

अहितान् अनिलोद्धूतैः केतुभिः तर्जयन् इव स रघुः दिग्विजययात्रामा-रभते। प्रथमं स पूर्वां दिशं प्रति प्रतस्थे। प्राचीनबर्हिः इन्द्रः। रघुः प्राचीनबर्हिषा तुल्य आसीत्। स कथं जगाम? यात्रायां सैन्यानामग्रे पताकासहितो ध्वजः अदृश्यत। तेन ध्वजेन स शत्रून् तर्जयन्निव जगाम। अंगुष्ठसन्निहितायाः अंगुल्याः तर्जनीति संज्ञा। तर्जयति अथवा भीषयति इत्यस्या अंगुल्याः तर्जनीति संज्ञा जाता। तर्जनं तु तां अंगुलीं उन्नमय्य 'पश्य पश्य' इति भीषणभाषणमेव खलु। अत्र ध्वजेन तर्जयन्नित्यत्रायं संकल्पः। सैन्यानां ध्वजः तस्य रघोः तर्जनीवादृश्यत। तया तर्जन्या स शत्रून् अभीष-यदिति च।

प्राची = पूर्वा दिक् । प्राचीनबर्हिः (सकारान्तः) = इन्द्रः । अनिलोद्धूतैः = पवनेन प्रकम्पितैः । केतुः = ध्वजः । अहितान् = शत्रून् । तर्जयन् = भाषयन् ।

अन्वयः— प्राचीनबर्हिषा तुल्यः स अनिलोद्धूतैः केतुभिः अहितान् तर्जयन् इव प्रथमं प्राचीं ययौ ।

रघुः प्रथममेव पूर्वां दिशमभिप्रतस्थे । स इन्द्र इव तेजस्वी अदृश्यत । तस्य सेनामुखे पवनसंचालिता पताका अवर्तत । सा पताका प्रतिकूलतया अभ्यागतान् शत्रूनभिलक्ष्य 'अरे पश्यत पश्यत, यूयं न भविष्यथ' इति साकूत तर्जयन्तीवादृश्यतेति कविरुत्प्रेक्षते ।

केतुशब्दस्य ध्वजः पताका इति च द्वावर्थौ स्तः । अत्र तर्जयन्निति क्रियापक्षे ध्वजार्थो युक्तः । अनिलोद्धूतैः इति विशेषणार्थपक्षे पताकार्थो युक्तः । केतुशब्दः ध्वजार्थे एव कालिदासेन प्रयुक्तः शाकुन्तले "चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य" इति । भवतां यद् युक्तं प्रतिभाति तत् स्वीकरणीयम् ।

'अञ्च्' इति कश्चित् धातुरस्ति । गतिः पूजनं च तस्यार्थः । केषुचित् रूपेषु तस्य नकारो लुप्यते । तदा 'अच्' इति भवति । तस्मात् प्र, प्रति, उद्, अव इत्युपसर्गाणां योगेन स्त्रीलिङ्गे क्रमेण प्राची, प्रतीची, उदीची, अवाची इति शब्दाः जायन्ते । पूर्वा, पश्चिमा, उत्तरा दक्षिणा इति यथाक्रममर्थः ।

उद् + धू + त = उद्धूत । अनिलेन उद्धूताः ।

---

अथ तस्य सैन्यस्य असंख्येयत्वं भीषणत्वं च दर्शयति ।

29 रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसन्निभैः

भुवस्तलमिव व्योम कुर्वन् व्योमेव भूतलम् ।

पदच्छेदः– स्यन्दनोद्धूतैः गजैः च । भुवः तलम् इव । व्योम

अत्रयात्रायां रथानां चक्रचंक्रमणेन रजांसि उत्पतन्ति । तानि ऊर्ध्वम् गत्वा आकाशे प्रसरन्ति । मेघसदृशाः गजाः भूतले च संचरन्ति । अस्य दृश्यस्य संदर्शकानां मनसि एवमाशंका जायते । 'किम् इतः पर्यन्तं अधः

स्थिता भूमिः अधुना उपरिगता? किमुत उपरिस्थितमाकाशं अधः पतितम्। ईदृशीं शंकां उत्पादयन् स रघुः ययौ।

स्यन्दनः = रथः। घनसन्निभैः = मेघसदृशैः। व्योम (न. न. द्वि. ए.) = आकाशं। रजोभिः (स. न. तृ. ब.) = धूलिभिः।

अन्वयः— स्यन्दनोद्धूतैः रजोभिः घनसन्निभैः गजैः च व्योम भुवस्तलमिव भूतलं व्योम इव कुर्वन् (सः ययौ इति पूर्वेण पद्येन अन्वयः)।

स्यन्दनैः उद्धूतानि। घनैः सन्निभाः। कुर्वन् (त. पु. प्र. ए.) कृ + अतृ।

---

सैन्यस्य वैपुल्यं व्यापकत्वं चैव पुनरपि ब्रूते।

30 प्रतापोऽग्रे ततः शब्दः परागस्तदनन्तरम्।
ययौ पश्चाद्रथादीति चतुःस्कन्धेव सा चमूः॥

परागः तदनन्तरम्। पश्चात् रथादि इति।

तस्य रघोः सैन्यं चतुर्धा विभक्तमिवाद्दृश्यत। नात्र वर्ण्यते रथगज-तुरगपदातिरूपतया चतुर्धा विभक्तमिति। किन्तु अन्यथैव विभक्तम्। कथं तत् विभजनं? कथ्यते। तस्य सैन्यस्य प्रथमो विभागः प्रतापः। अहो! दिलीपसूनुर्महाप्रतापो रघुः दिग्विजयाय प्रस्थितवान्, इति वार्ताप्रसरः प्रतापः एव प्रथमो विभागः। स प्रताप अग्रे याति। तदनु तस्य सैन्यानां कोलाहल एव द्वितीयो विभागः। स कोलाहलो वार्तामनुयाति। तदनन्तरं सैन्यैरुद्धूतं परागपटलं नेत्रविषयं प्राप्नोति। तत् धूलिपटलं तृतीयो भागः। तत्पश्चादेव तस्य रथगजतुरगादिसंकुलं सैन्यं प्रयाति। एवं प्रथमं प्रतापः ततः शब्दः तदनन्तरं परागः तत्पश्चात् रथादिसैन्यमिति चतुर्धा विभक्तमिव तस्य सैन्यं ययौ।

अन्वयः— अग्रे प्रतापः, ततः, शब्दः, तदनन्तरं परागः, पश्चात् रथादि, इति सा चमूः चतुःस्कन्धा इव ययौ।

चमूः = सैन्यं। चत्वारः स्कन्धा यस्याः सा। स्कन्धाः व्यूहाः (शाखाः)

---

अत्रापि सैन्यस्य पुरःप्रयाणमेव विवृणुते।

31 मरुपृष्ठान्युदम्भांसि नाव्याः सुप्रतरा नदीः।
विपिनानि प्रकाशानि शक्तिमत्त्वात् चकार सः ।।

असामान्यशक्तिमान् रघुः सैन्यैः सह पुरोगच्छति। तदा स मार्गे ववविधानि विचित्राणि कर्माण्यकरोत् । मार्गे मरुभूमयः अविद्यन्त । तासु मरुभूमिषु स तत्र तत्र जलस्रोतांसि उत्पादयामास । तथा मार्गे नौकाभिः तरणीयाः जलपूर्णाः सरितः समदृश्यन्त। तादृशीः नदीः सुखेन तरणीयाः अकारयत्। एवमेव तस्य मार्गे यानि निबिडानि काननान्यासन् तान्युच्छेद्य प्रकाशानि च चकार।

अन्वयः— सः शक्तिमत्त्वात् मरुपृष्ठानि उदंभांसि, नाव्याः नदीः सुप्रतराः विपिनानि प्रकाशानि च चकार।

(उत्+अम्भांसि) उदम्भांसि (स· न· द्वि· ब·) उद्गतानि अंभांसि येषु तानि। (बहुव्रीहिः)

नौ+य=नाव्य। नौभिः तर्तुं योग्याः। सु + प्र+तृ + अ। शक्ति-मत्त्वात् = शक्तेः। (शक्ति+मत्+त्व) बुद्धिमत्त्वात् = बुद्धेः। भयवत्त्वं = भयं। तरुण–तरुणत्वं–तारुण्यवम्–तारुण्यवत् = तरुण। तारुण्यवत्त्वम् = तारुण्यं। चकार= कृ + अ (लिट्· प· प्र· ए·)

---

यदा स रघुः पूर्वाभिमुखं गच्छति स्म तदा सः भगीरथ इव बभासे।
32 स सेनां महतीं कर्षन् पूर्वसागरगामिनीम्।
बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः ॥

अयोध्यातः स राजा पूर्वसागराभिमुखं एव गच्छति। अग्रे अग्रे रघुः पश्चात् पश्चत् कोलाहलाकुला सदोच्चला सेना प्रवाहरीत्या अनुयाति च। तदा स भगीरथ इव बभौ। कथं रघोः भगीरथस्य च परस्परं सादृश्यमस्ति इति चेत् कथ्यते। शिवस्य जटायाः भ्रष्टां गङ्गां पुरा भगीरथः पूर्वसागराभि-मुखं अनयत्। तदापि भगीरथः पुरतः पुरतः, ऊर्मिमालासंकुला सारवा मन्दाकिनी पश्चात् पश्चात् इति रीत्यैव ययौ। ततस्तयोः परस्परं सादृश्यं कथितम्।

अन्वयः— महतीं पूर्वसागरगामिनीं सेनां कर्षन् सः हरजटाभ्रष्टां गङ्गां कर्षन् भगीरथः इव बभौ।

अस्ति काचित् पौराणिकी कथा। तस्याः कथाया एवात्र उपमानांशः कविना गृहीतः। पुरा किल सगरस्य पुत्राः कपिलमुनेः शापाग्नौ दग्धाः अभवन्। तेषां प्रपौत्रः भगीरथो नाम कश्चिद् राजा अजायत। सः शापदग्धानां स्वप्रपितामहानां उज्जीवनार्थं स्वर्गात् गङ्गां अवतारयामास। यदि गंगा भूमौ निपतेत् तर्हि भुवि प्रलयः स्यात्। ततः भगीरथस्याभ्यार्थनया हरः तां गंगां स्वजटाभारे बभार। ततः आवश्यकमेव प्रवाहं भगीरथाय परमशिवः स्वजटायाः अमुञ्चत्। तां गङ्गाधारामेव भगीरथः पूर्वसागराभिमुखमनयत्।

कर्षन् (त. पु. प्र. ए.) कृष्+अत्। पूर्वश्चासौ सागरश्च । पूर्वसागरं गच्छतीति पूर्वसागरगामिनी। हरः = शिवः। हरस्य जटा हरजटा। हरजटायाः भ्रष्टा हरजटाभ्रष्टा। भ्रंश्+त = भ्रष्ट। बभौ = अशोभत। भा (लिट्. प. प्र. ए.)

रघोर्मार्गो निर्विघ्नो निरामयश्चासीदिति वदति।

33 त्याजितैः फलमुत्खातैः भग्नैश्च बहुधा नृपैः।
तस्यासीदुल्बणो मार्गः पादपैरिव दन्तिनः॥

कश्चित् गजः कानने चरति। तस्य पुरतः फलवन्तः केचन तरवः सन्ति। सः तेषां शाखाः आकुञ्चिताः कृत्वा फलान्यादाय भक्षयित्वा तान् तरून् निरपायानेव मुक्त्वा याति। केचन तरवो निष्फलाः मार्गे विघ्नकारिणः दृश्यन्ते। गजः तान् उत्पाट्य उन्मूल्य वा दूरे क्षिपति। केचन तरवः उत्पाटनाक्षमा भवन्ति। तान् भग्नान् कृत्वा स गजः स्वां यात्रामप्रतिबन्धां करोति। रघुरप्ययं गज इवानन्तरायो जगाम। मार्गे केचन नृपाः तस्य विधेया अभवन्। ते तस्मै करमयच्छन्। केचन मार्गेष्वचञ्चला स्थिताः। तान् समूलमुन्मूल्य भ्रष्टपदानकरोत्। अथान्ये केचन तमभियोद्धुमागच्छन् तैः सह युद्ध्वा स तान् बभञ्ज।

अन्वय :—फलं त्याजितैः उत्खातैः बहुधा भग्नैश्चः नृपैः तस्य मार्गः, दन्तिनः मार्गः फलं त्याजितैः उत्खातैः बहुधा भग्नैश्च पादपैः इव उल्बणः आसीत्।

उत्खातैः = उन्मूलितैः। उल्बणः = विशदः, निर्विघ्नः। त्याजित = त्यज् धातोः क्तप्रत्ययान्तः शब्दः। (प्रयोजकरूपम्) उद्+खन्+त = उत्खात

[ह्यः = अतीते दिने, yesterday. सम्पद्यन्ते = भवन्ति, जायन्ते। शृङ्खलिताः = शृङ्खलाबद्धाः, chained. आहताः = प्रहृताः, पीडिताः। निघ्नन्ति = प्रहरन्ति, (हन्ति हतः घ्नन्ति) प्रस्रावयन्ति = प्रवाहयन्ति। शुण्डा = गजानां करः। विवरम् = द्वारम्। विजिगीषा = विजेतुमिच्छा। शक्नुयात् = शक्तो भवेत्। सेतुः = नदीतरणार्थं निर्मितो मार्गः (bridge). अतिरिक्ता = भिन्ना। स्थाली = plate. विशेष इति पदं "one kind of" इत्यर्थे प्रयुज्यते। दूर्वा = तृणविशेषः one kind of garss. वृक्षविशेषाः some kinds (some sorts) of trees. हुतवहः = अग्नि। धूपः = सुगन्धिधूमः हुतभुजः = अग्नेः। तद्वत् = तथा। वसनम् = वस्त्रम्। निर्धारितम् = निश्चितम्, उद्दिष्टम्। प्राग् = पूर्वम् साकूतम् = साभिप्रायं। ऊर्मिः = तरंगः। अनन्तरायः = निर्विघ्नः।

॥ अभ्यासः ॥

I वाक्येषु प्रयुङ्क्त:—

1) ददृशुः 2) अश्रोष्यत् 3) कथय 4) विस्मरिष्यामि 5) अयुध्यत 6) विद्यते 7) व्यलिख्यत 8) लभेत 9) अलेखयत् 10) दर्शितम्। (eg. जगाम–सीता ग्रामं जगाम)

II पदघटकानि विश्लेषयत:—

1) तर्जयेत् 2) नाव्याः 3) सुप्रतरा 4) गामिनी 5) त्याजित (eg. लिखन्ती-लिख् + अत् + ई)

III पदानि विश्लेषयत:—

1) अनिलोद्धूतैस्तर्जयन्निव 2) स्यन्दनोद्धूतैर्गजैश्च 3) कुर्वन्व्योमेव 4) पश्चाद्रथादीति 5) फलमुत्खातैर्भग्नैश्च

(eg. तस्यासीदुल्बणोमार्गः– तस्य + आसीत् + उल्बणः + मार्गः)

IV अद्य पठितस्य श्लोकपञ्चकस्य सारं संस्कृते लघुभिर्वाक्यैः संक्षिपत।

V केवलवाक्यानि प्रयोजकरूपतया परिणमयत।

(eg. बालः चरति। माता बालं चारयति)

1) नृपः जनान् रक्षति। 2) कन्या पत्रं अलिखत्। 3) छात्रः पठति।

VI पाठारंभे दत्तं पद्यसंक्षेपं अनुवदत॥

# द्वाविंशो दिवसः

अयमद्य पठितपूर्वाणां पञ्चानां श्लोकानां अर्थसंग्रहो भवतामनुसन्धानार्थम् क्रियते प्रथमत एव।

रघोः राज्यं लब्धम्। शत्रवो भीताः समपद्यन्त। शरदृतुरागतः। दिग्विजयाय स प्रतिष्ठासते स्म। प्रथमत एव पूर्वां दिशं स ययौ। स राजा देवेन्द्रेण सदृश आसीत्। यथा इन्द्रः स्वर्गे सर्वेषामपि देवनामुत्तमः तथा रघुः भूमौ समस्तानामपि नराणां श्रेष्ठः अवर्तत। गमनावसरे सैन्यानामग्रे ध्वजोऽदृश्यत। अत्र कविरुत्प्रेक्षते। अभिमुखमापततो रिपून् उद्दिश्य तर्जनीमुन्नमय्य "अरे जाल्म, पश्य त्वं न भविष्यसि" इति भीषयन्निवेति। उन्नमितया तर्जन्यैव वयं तर्जनं कुर्मः अर्थात् अन्यान् भीषयामः। उन्नमितायाः तर्जन्याः उन्नतस्य ध्वजस्य च सादृश्यमस्ति च। द्वयोरपि परेषां भयदायकत्वं चास्ति।

अथ समीक्षकाणां भुवं आकाशं च विषयीकृत्य भ्रमोऽजायतेति कथ्यते। पाशं दृष्ट्वा पाशः इति यथार्थबोधः प्रमा इति कथ्यते। पाशं दृष्ट्वा सर्प इति अयथार्थबुद्धिः भ्रमः इति च। जंबुकं दृष्ट्वा जंबुक इति बुद्धिः प्रमा। जंबुकं दृष्ट्वा श्वा इति बुद्धिः भ्रमः। रघोः सैन्ये रथानां नेमिचंक्रमणेन रजांसि ऊर्ध्वमुत्पतन्ति। तेन आकाशं मृन्मयं संजातम्। सैन्यगजानां सहस्राणि च भुमौ चरन्ति। ते मेघा इव श्यामाः स्थूलाश्चलनस्वभावाश्च। एवं स्थिते, आकाशस्य भूमेश्च मध्ये स्थितानां सन्दर्शकानां एवं भ्रमः समुत्पद्येत। "किमियं भूमिः ऊर्ध्वमाकाशम् गता? किमाकाशम् अधो गत्वा भूमे रूपेण परिणतम्?" इति। कुत? । आकाशं सैन्योद्धूतै रजोभिः मृन्मयम् जातम्। मेघा इति भ्रममादधानाः श्यामा गजाः भूमौ च चरन्ति। अतः भूमौ आकाशभ्रमश्च।

पुनरपि सैन्यस्यैव भीषणतां प्रथयति कविः। व्यूहो नाम सैन्यानां विभागः। रघोः सैन्यम् चतुर्व्यूहतया विभक्तमिव जगाम किल। प्रायशस्तु सैन्यम् रथ गजतुरग पदातिभिश्चतुर्धा विभक्तं दृश्यते। अत्र तु न तथा विभक्तमदृश्यतेति कथ्यते। सर्वेषामप्यग्रे प्रतापः। "अहो! अयं रघुरागच्छति। स दिग्जयाय

प्रातिष्ठत किल" इति जनानां मध्ये यो वार्ताप्रसरः स एवात्र प्रतापः। एवमाशंकाकुलाः जनाः यदा भीता वर्तन्ते तदा सैन्यात् संजातः आह्वानाट्टहासादिरूपः कोलाहलः श्रवणगोचरीभवति। तं कोलाहलमनु ते दृष्टिं प्रहिण्वन्ति। तदा तु दृश्यते दृष्टिपथमन्धीकुर्वन् परागपटलः। तत्पश्चादेव रथादिसैन्यम् आगच्छति। एवम् आदौ प्रतापः ततः शब्दकोलाहलः, तदनन्तरं सेनापरागः, अन्ते रथादयः सेनाश्च इति चतुर्धा व्यूहितम् इव तत् सैन्यम् प्रायात्।

अथ चतुर्थ पद्येन, रघुणा पन्थानः निष्प्रतिबन्धाः व्यरच्यन्तेति वदति। मार्गे तत्र तत्र मरुप्रदेशाः समापतिताः। तेषु निर्जलप्रदेशेषु कूपतटाकादिकान् उत्खाय जलदौर्लभ्यं परिजहार। तत्र तत्र अगाधाः नद्यः तस्य स्वच्छन्दप्रयाणम् प्रतिबबन्धुः। तास्तु नद्यः नौभिरेव तरणीया अवर्तन्त। रघुः ताः यथाकथञ्चित् सुखेन तरणार्हाः चकार। तथा मार्गे निबिडानि काननानि तस्य गतिं निरुरुधुः। तानि सर्वाण्यपि उत्पाट्य उच्छेद्य च सुगमानि ततान। नात्र प्रभुशक्तिः मन्त्रशक्तिश्च प्रयोजकीभवतः। उत्साहशक्तिरेवात्र प्रभवतीति तस्य उत्साहशक्तिमत्त्वादेवैतानि अक्लिष्टतया निर्वृत्तानि।

अथानन्तरेण पद्येन तस्य रघोः भगीरथसादृश्यं प्रकटयति। पुरा किल भगीरथो नाम राजा कपिलदग्धानां स्वप्रपितामहानां उज्जीवनार्थम् गङ्गां स्वर्गादवातारयत्। तस्याः प्रवाहं हरः जटाभारे दधार। ततस्तां हरजटाया अवतार्य पूर्वसागराभिमुखमनयत् किल। रघोः सेना पूर्वसागराभिमुखं गच्छति। अर्थात् रघुः स्वां सेनां पूर्वसागराभिमुखं नयति। रघुः पुरतो गच्छति, तत्पश्चात् रथतुरगादिसंकुलं कोलाहलाकुलं बलम् च। तथैव भगीरथोऽपि पुरो जगाम। अग्रे अग्रे भगीरथः पश्चात् पश्चात् ऊर्मिमालाकलिता सारवा मन्दाकिनी च इति।

रघुः निर्विघ्नः निरपायः निर्भीकश्च प्रयाति। मार्गे कतिचन नृपाः तस्मै करं बहुमूल्यानुपहारांश्च दत्त्वा विधेया अभवन्। केचन नृपाः तस्य मार्गं प्रत्यबध्नन्। स तादृशान् सर्वानपि उत्खाय भ्रष्टपदानकरोत्। अथ केचन राजानः तमभियोद्धुमभ्यपतन्। तैः सह नियुध्य सर्वानपि स बभञ्ज। इत्थं स स्वमार्गं विशदं वीतकण्टकं चारचयत्। अत्र रघुं मत्तगजेनोपमाति कविः। यथा कश्चन मत्तहस्ती पुरस्तात् दृष्टान् फलिनो वृक्षान् फलाहरणार्थमाकुञ्चयति, यथा च मार्गविघ्नकारिणः पादपान् उन्मूल्य दूरतः क्षिपति, यथा

च दुरुन्मूलान् गत्यन्तरायकारिणः क्षितिरुहान् भग्नान् करोति तथा रघुरपि चकारेत्यर्थः । एकत्र रघुः प्रतिपक्षनृपाः च; अन्यत्र तु दन्ती पादपाश्चेति विशेषः । द्वयोरपि वृत्तयः समाना एव ।

---

पूर्वस्मिन् पद्ये मगध मणिपुरादि जनपदानां विजयकथा कथितेत्यनुमीयते । अथ रघुः वङ्गसमुद्रतीरं उपयाति ।

34 पौरस्त्यानेवमाक्रामंस्तांस्ताञ्जनपदाञ्जयी ।
प्राप तालीवनश्याममुपकण्ठं महोदधेः ॥

सारः—वङ्गराज्यस्य उत्तरपश्चिमदिशि विद्यमानान् जनपदान् स जित्वा । ततो महोदधेः वङ्गसमुद्रस्य परिसरप्रदेशम् स विजयी प्राप्तवान् । सः प्रदेशस्तु तालवनैः श्यामवर्णश्चासीत् ।

पदच्छेदः—पौरस्त्यान् एवं आक्रामन् तान् तान् जनपदान् जयी । तालीवनश्यामम् उपकण्ठम् महोदधेः । जयी (न. पु. प्र. ए) जि+इन्=जयिन् ।

जनपदान् =देशान् । तालीवनम्=तालवनम् । उपकण्ठम्=समीपम्

अन्वयः—एवं पौरस्त्यान् तान् तान् जनपदान् आक्रामन् जयी स तालीवनश्यामम् महोदधेः उपकण्ठम् प्राप ।

एवमुक्तरीत्या प्राच्येषु प्रदेशेषु आक्रमणं कृत्वा जयशीलः स-रघुः तालवनैः श्यामलाभम् पूर्वसमुद्रतीरं गतवान् ।

पुरस्+त्य, पौरस्त्य । दक्षिणा+त्य–दाक्षिणात्य । पश्चात्—पाश्चात्त्य उत्तरशब्दात् तु औत्तराह इति रूपम् । अधोनिर्दिष्टाः समानार्थकाः ।

प्राच्याः =पौरस्त्याः । प्रतीच्याः =पाश्चात्याः
अवाच्याः =दाक्षिणात्याः उदीच्याः =औत्तराहाः ।

तांस्तानिति तच्छब्दस्यावर्तनमर्थविशेषम् सूचयति । तांस्तान् =Respective.

---

सुह्माः नृपाः आत्मरक्षार्थम् तस्य जेतुर्विधेया अभवन्निति कथ्यते ।

35 अनम्राणां समुद्धर्तुस्तस्मात् सिन्धुरयादिव ।
आत्मा संरक्षितः सुह्मैर्वृत्तिमाश्रित्य वैतसीम् ॥

वेतसाः नाम नदीतीरेषु विद्यमानाः केचन तृणविशेषाः । (Ratan) यदा नदी प्रवहति तदा ते शिरसा अथवा अग्रभागेण प्रवाहानुकूलम् प्रणिपतन्ति, पश्चान्निवर्तन्ते च । प्रवाहाभिभवभयात् न खलु ते प्रवाहान्तेरमभितिष्ठन्ति । ईदृशीं वेतसवृत्ति आत्मरक्षार्थम सुह्मनृपाः

अङ्गीचक्रुः। रघोरागमने ते राजानः तदनुकूलं शिरसा प्रणेमुः। अत एव रघोर्निष्क्रमणे ते भञ्जनाद्विमुक्ताः। ततस्तेषामात्मरक्षा लब्धा।

अनम्राणां = अविनीतानाम्। =उन्मूलनाशकात् (ऋ. पुं. ष. ए)। सिन्धुरयात् = प्रवाहवेगात्। सुह्मैः = प्रवर्तनम्। वैतसी = वेतससंबन्धिनी।

अन्वयः— अनम्राणां समुद्धर्तुः तस्मात् सुह्मैः वैतसीं वृत्तिमाश्रित्य सिन्धुरयादिव आत्मा संरक्षितः।

सारः— स रघुः अविनीतानां नाशकः खलु। तादृशात् तस्मात् सुह्मदेशनृपाः आत्मानं रक्षितवन्तः। कथम्? वैतसीं वृत्तिमाश्रित्य। वेतसाः प्रवाहप्रतिकूला न तिष्ठन्ति। प्रत्युत, प्रवाहवेगं अनुसृत्य किञ्चित् नतशीर्षा अनुवर्तन्ते, ततः निरपाया एव पश्चात् निवर्तन्ते च। अन्यथा ते प्रवाहभग्नाः भवेयुः। ईदृशीं वेतसवृत्तिमाश्रित्य सुह्माः स्वयं रक्षिताः।

कृ + तृ = कर्तृ। पच् + अक = पाचक। गम् + इन् = गामिन्। एतेषां पदानां व्युत्पत्तिः परिचितैव। एतेभ्योऽन्येऽपि कर्त्रर्थे एव विहिताः कतिचन प्रत्यया अपि सन्ति। उदाह्रियते।

प्रत्ययः, 'अन'—क्रुध् + अन; क्रोधन, रोषण, भीषण। क्रोधिन्, भीषक इत्येवार्थः।

'आलु'—स्पृह् + आलु = स्पृहयालु, निद्रालु, दयालु,। (स्पृहयत्, निद्राण।)

'मर' or 'वर'—वि सृ + मर = विसृमर, नश् + वर = जित्वर। विसरत्, नश्यत्, तिष्ठत्, जयत् इत्याद्यर्थः।

'उर'—भास् + उर = भासुर, भञ्ज् + उर = भङ्गुर।

'इष्णु—उत् + पत् + इष्णु = उत्पतिष्णु, सहिष्णु, रोचिष्णु, चरिष्णु।

'र'—कम् + र = कम्र, स्मि + र = स्मेर, नम् + र = नम्र।

समुद्धर्ता = सं + उद् + धृ + तृ। आ + श्रि + त् + य = आश्रित्य। तकारागमो विशेषः। 'स्तुत्यं स्तुतिभि' रित्यत्र कथितम्।

तिङन्तक्रिया—सुह्माः आत्मानं समरक्षन्। सुह्मैः आत्मा समरक्ष्यत।

सुबन्तक्रिया—सुह्माः आत्मानं संरक्षितवन्तः। सुह्मैः आत्मा संरक्षितः।

प्रधानक्रियाः तिङन्तक्रिया इति कथ्यते, विशेषणीभूताः अप्रधानक्रियाः सुबन्तक्रिया इति च। द्वादशे दिने तत् सम्यक् विवृतमस्ति। वीक्ष्यतां तत् प्रकरणम्।

॥ प्रयोगविशेषाः ॥

| कर्तरि अपूर्णक्रियाः | कर्तरि पूर्णक्रियाः |
|---|---|
| अनम्राणां समुद्धर्ता (समुद्धारकः) रघुः । | रघुः अनम्रान् समुद्धरति । |
| पत्रस्य लेखित्री (लेखिका लेखिनी) कन्या । | कन्या पत्रं लिखति । |
| लोकस्य रक्षिता (रक्षकः, रक्षी) ईश्वरः । | ईश्वरः लोकं रक्षति । |
| तारकाणां द्रष्टारः (दर्शकाः दर्शिनः) जनाः । | जनाः तारकाः पश्यन्ति । |

उपरि निर्दिष्टेभ्यः उदाहरणेभ्यः इदमवधेयम् । कर्तरि अपूर्णक्रियाणां कर्माणि षष्ठीविभक्त्यन्तानि दृश्यन्ते । पूर्णक्रियाणां तु तानि द्वितीयाविभक्त्यन्तानि भवन्ति । शतृ शानजन्तानां कर्माणि तु द्वितीयायामेव स्युः । यथा–गजं पश्यन् बालः । पितरं वन्दमानः पुत्रः ।

अथ वङ्गान् विजित्य स गङ्गाप्रवाहाणामन्तरालेषु जयस्तंभानस्थापयत् ।

36 वङ्गानुत्खाय तरसा नेता नौसाधनोद्यतान् ।
निचखान जयस्तम्भान् गङ्गास्रोतोऽन्तरेषु सः ॥

सुह्मविजयानन्तरं स नेता वङ्गान् जेतुं प्रातिष्ठत । वङ्गास्तु नौकायुद्ध निपुणाः । स्थलेष्विव जलेष्वपि ते युद्धं कुर्वन्ति । तेन तेषां युद्धसामग्रीषु नौका एव प्रधानाः । नौरूपिणीभिः सामग्रीभिः सह युद्धायोद्यतान् तान् वङ्गनृपान् रघुः स्वबलेन उदमूलयत् । एवं तानुन्मूल्य रघुः सर्वविजयी भूत्वा स्वनामाङ्कितान् जयस्तम्भान् गङ्गाप्रवाहाणां मध्ये विद्यमानेषु अवकाशेषु स्थापयामास । गंगा वंगदेशम् गत्वा समुद्रपतनात् पूर्वं बहुशखा परिणमति । तासां शाखानामन्तरालप्रदेशेष्वित्यर्थः ।

उत्खाय = उन्मूल्य । तरसा = बलेन । साधनम् = सामग्री । निचखान = प्रतिष्ठापयामास । स्रोतः = प्रवाहः ।

अन्वयः—नेता सः नौसाधनोद्यतान् वङ्गान् तरसा उत्खाय गङ्गास्रोतोऽन्तरेषु जयस्तम्भान् निचखान ।

खननम् खनिः उत्खाय निचखान इत्यादीनि पदानि एकस्मादेव 'खन्' धातोरुत्पन्न ।न । गंगायाः स्रोतसां अन्तरेषु ।

उद्+खन्+य (ल्यबन्तः) । अत्र 'खन्' 'खा' रूपतामापद्यते इति विशेषः । उत्खातः उत्खातवान् इत्यादिषु चायम् विशेषो दृश्यते ।

नि–खन् (लिट्. प. प्र. ए) निचखान, निचखनतुः, निचखनुः ।
सः जयस्तम्भान् निचखान । तेन जयस्तम्भाः निचखिनरे ।

पराजिताः रिपवः स्वस्थानेष्वेव प्रष्ठापिताः। एवं वङ्गानां पराजयः तेषामेव समृद्धयेऽभवदिति सोदाहरणमुच्यते।

37 आपादपद्मप्रणताः कलमा इव ते रिपुम्।
फलैः संवर्धयामासुः उत्खातप्रतिरोपिताः॥

प्रथमं कृषीवलाः शालीनां सस्यानि एकत्र निबिडतया प्ररोपयन्ति। ततः तानि कलमसस्यानि एकैकशः उत्खाय अथवा उन्मूल्य अन्यत्र क्षेत्रे प्ररोपयन्ति। तत्र लब्धप्रतिष्ठानि तानि वर्धन्ते फलन्ति च। एवं उत्खनन-पुनःप्रतिरोपणाभावे व्रीहयो नप्रभूतम् फलन्ति। उत्खातप्रतिरोपितास्तु कलमाः तत्कर्त्रे कृषीवलायैव शतगुणमुपकुर्वन्ति। तथैव रघुः अभिमुख-मायातान् वङ्गनृपान् समूलमुन्मूल्य पुनः प्रतिष्ठापितवान्। एवं रघुणा पुनः-प्रतिष्ठापितास्ते राजानः तस्य विधेया भूत्वा रत्नादिभिरुपहारैः विविधै-र्विभवैश्च रघुं संवर्धयामासुः।

आपादपद्मप्रणताः= पादपद्मपर्यन्तं कृतप्रणामाः। आपादं =पादपर्य-न्तम्। आसमुद्रम्= समुद्रपर्यन्तम्। कलमाः शालयः (paddy)। प्रति-रोपिताः= पुनर्वर्धिताः।

अन्वयः—उत्खातप्रतिरोपिताः कलमाः इव आपादपद्मप्रणताः ते रघुं फलैः संवर्धयामासुः।

पूर्वं उत्खाताः पुनः प्रतिरोपिताः उत्खातप्रतिरोपिताः। क्तप्रत्ययान्तौ शब्दौ एवं समस्येते। तस्य समस्तपदस्य विग्रहोऽपीदृशः। पूर्वं स्नातः पश्चात् भुक्तः =स्नानभुक्तः। बद्धमुक्तः।

---

वङ्गविजयान्तरं रघुः दक्षिणतः उत्कलान् (उडिया) प्रति प्रतिष्ठते
38 स तीर्त्वा कपिशां सैन्यैर्बद्धद्विरदसेतुभिः।
उत्कलादर्शितपथः कलिङ्गाभिमुखो ययौ॥

वङ्गान् विजित्य सः कलिङ्गान् जेतुं दक्षिणां दिशं प्रतस्थे। मध्येमार्गं उत्कलदेशो वर्तते। वङ्गानां उत्कलानां च मध्ये कपिशा नाम नदी प्रवहति अगाधजलां तां तरितुं तेन काचन योजना कृता। कतिपयसैन्यगजानां प्रवाहे पंक्तिं विधाय सेतुरूपेण स्थापयामास। तेषां पृष्ठभागेन स सेना सहितः पारं गतवान्। एवं स उत्कलान् प्रविवेश। तत्र युद्धस्यावश्यकता नासीत्। रघोर्दर्शनेनैव विधेया अभवन्। ते रघवे कलिङ्गमार्गं निरदिशन्। तेन मार्गेण अक्लिष्टमेव सः कलिङ्गानभिययौ।

यद्वा: द्विरदाः एव सेतवः येन सः। द्विरदाः=गजाः! उत्कलैः आवर्जितः पन्थाः यस्मै सः। पथिन् शब्दः नकारान्तः खलु। द्वितीयाद्वि-वचनपर्यन्तं अयं शब्दः पन्थान् इति रूपम् भजते। द्वितीयाबहुवचनात् परं स्वरप्रत्ययसंयोगे 'पथ्' इति परिणमति। समासे 'पथिन्' शब्दः 'पथ' इति अकारान्तो भवति। राजपथः, महापथः। प्रथमैकवचने पन्थाः इति रूपम्। कलिङ्गानां अभिमुखः।

तृ+क्त्वा=तीर्त्वा। केषुचित् रूपेषु 'तृ' धातुः 'तीर्' इति परिणमति तरणं, तीर्त्वा, उत्तीर्य, तीर्ण, अवतारः, इत्यादयः तृ धातोरुत्पन्नाः शब्दाः। द्वौ रदौ (दन्तौ) यस्य सः द्विरदः।

---

अथ रघुः कलिङ्गान्तर्गते महेन्द्रपर्वतशीर्षे सेनां निवेशयामास।

39 सः प्रतापं महेन्द्रस्य मूर्ध्नि तीक्ष्णं न्यवेशयत्।
अङ्कुशं द्विरदस्येव यन्ता गंभीरवेदिनः।

महेन्द्रो नाम कलिङ्गानाम् उत्तरस्यां दिशि विद्यमानः पर्वतकूटः। तस्य शृङ्गं रघुः स्वसेनानिवेशमकरोदिति पद्यसारः। एतमर्थं भंग्यन्तरेण कविः कथयति। तस्य पर्वतस्य शिरसि रघुः स्वं तीक्ष्णं प्रतापं न्यवेशयत्। कस्याप्यन्यस्यौन्नत्यमाक्रमणं वा असहमानः स गिरिः चिराय उच्छिरस्क-स्तिष्ठति। तस्य शिरांसि स विजयी रघुः पादेनाहन्ति स्म। सैन्यैः आघात-यामास च। उक्तमर्थम् कविरुपमया स्पष्टीकरोति। गम्भीरवेदी गजविशेषः, रक्तस्रुतौ मांसच्छेदे च अचञ्चलचित्तो गज एव गम्भीरवेदीति कथ्यते। सः कमपि न गणयति। कस्यापि विधेयो न भवति। तादृशस्य हस्तिनो मस्तके यथा आधोरणः अंकुशमाधाय तंवशगं करोति तथा रघुः तमविधेयं गिरिं विधेयं चकार।

मूर्ध्नि=शिरसि। मूर्धन् शब्दो नकरान्तः आत्मन् शब्दवत्। नि+अ+विश्+अय+त्, (प्रयोजकार्थः)। यन्ता=आधोरणः (यम्+तृ यन्तृ विद्+इन्=वेदिन्।

सेना न्यविशत्। रघुः सेनां न्यवेशयत्। रघुणा सेना न्यवेश्यत रघुणा निवेशिता सेना।

---

पठितपूर्वः,पठितचरः=पूर्वम् पठितः। अनुसन्धानम्=परस्पर-सम्बन्धोद्बोधनम्। समपद्यन्त=अभवन्, अजायन्त। प्रतिष्ठासते=प्रस्थातु मिच्छति। जाल्मः=नीचः। तर्जन्या+एव। जम्बुकः=क्रोष्टा, Jackal)। भ्रमः=अयथार्थबोधः। प्रमा=यथार्थबोधः। नेमिः=रथचक्राणां लोहमयं वहिर्वलयम्। प्रथयति=प्रख्यापयति। प्रायशः=प्रायेण Genera

(more or less)। 'नाम' इत्यव्ययं बहुष्वर्थेषु प्रयुज्यते। अत्र तु, नाम = is called. प्रहिण्वन्ति = प्रेषयन्ति। व्यरचयन्त = विरचिताः। उत्खाय = उत्खननम् कृत्वा। निरुरुधुः = न्यरुन्धन्। तरणार्हा = तरणीयाः। उत्पाट्य = उत्खाय, उन्मूल्य। ततान = चकार। बलम् = सैन्यम्। ऊर्मिः = तरङ्गः। सारवा = सशब्दा। निर्भीकः = निर्भयः। तम् अभियोद्धुम् = तेन सह युद्धं कर्तुम्। अन्तरायः = विघ्नः। जिगाय = अजयत्। श्यामलाभम् = श्यामलप्रभम्। वेतसः = तृणविशेषः (Ratan)। निबिडता = सान्द्रता। शाली = व्रीहिः (Paddy)। प्ररोपयति = प्ररोहयति। प्रभूतम् = समृद्धम्। कतिपय = कतिचन (Some)। कतिपयैः जनैः, कतिपयेषु जनेषु। तर्तुम् = तरणाय। निवेशः = निवास स्थानम्। न्यवेशयत् = स्थापयामास। कस्य अपि अन्यस्य औन्नत्यं आक्रमणम्। चिराय = बहोः कालात्। उच्छिरस्कः = उन्नतमस्तकः। (उद् + शिरस्) आहन्ति स्म = प्रहृतवान्। स्रुतिः = प्रवाहः। शब्दवत् = शब्द इव। इव इत्यर्थे 'वत्' इति कश्चन प्रत्ययोऽस्ति तदन्तं पदमव्ययं भवति। यथा वृक्षवत् = वृक्षः (वृक्षाः) इव। राजवत् पञ्चवर्षाणि दशवर्षाणि दासवत्। प्राप्ते तु षोडशे वर्षे पुत्रम् मित्रवदाचरेत्।

॥ अभ्यासः ॥

I 'धनिन्' 'राजन्' इति नकारान्त शब्दयोः, 'विशेत्' इति लिङन्तस्य च सर्वाणि रूपाणि लिखत।

II पूरयत — 1) अहं पुत्राय कथां...... । 2) यदि दीपः...(ज्वल्) तर्हि प्रकाशः...(प्रसृ)। 3)...मम पुत्राय पत्रम् लिखानि। 4)...इमां वार्तां वदेम। 5)...सौख्येन वर्तन्ताम्।

III पदानि विश्लेषयत—

1) पौरस्त्यानेवमाक्रामंस्तांस्ताञ्जनपदाञ्जयी। 2) सुह्मं वृत्तिमाश्रित्य 3) सैन्यैर्बद्धद्विरदसेतुभिः। 4) द्विरदस्येव 5) तस्यासीदुद्धणो मार्गः

IV पूर्णक्रियासु वाक्यानि प्रयुञ्जत। (हनुमान् रामस्य आराधकः = हनुमान रामं आराधयति।)

1) रामायणस्य रचयिता वाल्मीकिः 2) वित्तस्य संपादका जनाः 3) काननानां उन्मूलयिता रघुः। 4) फलानां आहर्तारः बालाः 5) तृणानां भक्षकाः मृगाः।

V अद्य पठितानां पाठानां सारं संस्कृते संक्षिप्य लिखत।

VI पाठरंभे दत्तं पाठसंक्षेपम् अनुवदत।

# त्रयोविंशो दिवसः

पाठ्यपूर्वं विषयं सङ्गृह्यैव अद्यतनं पद्यविभागमध्येतुमारभामहे। वङ्गदेशादुत्तरतः पश्चिमतश्च विद्यमानान् जनपदान् स रघुः आचक्राम। ते जनपदास्तु अयोध्यातः पौरस्त्या एव। अत एव पद्ये "पौरस्त्यान्" इति पदेन ते विशेषिताः। रघुः न कुत्रापि पराजितोऽभूत्। सर्वत्र जयशील एवासीत्। तान् जनपदानाक्रम्य स जेता वङ्गसमुद्रस्य तीरं प्राप्तवान्। तत् तीरं तु तालवनेन श्यामलमदृश्यत।

तत्र तु 'सुह्म' नामा कश्चन जनपदः अवर्तत। रघोराक्रमणकोलाहले दूरादाकर्णिते सत्येव ते स्वयमेव विधेया बभूवुः। यदि ते अभियोद्धुमुत्सहेरन् तर्हि तेषां सर्वनाशो निश्चित एव। कुतः? स अनम्राणां समुद्धर्ता खलु। ये अविनीता अविधेयाश्च वर्तन्ते तेषां उन्मूलनाशो निश्चित एव। तत् प्रथमत एव विज्ञाय ते रघुं नम्रशिरस्का एवोपागच्छन्। तथा तैः आत्मा संरक्षितः। अर्थात् ते स्वयं रक्षामलभन्त। कविरात्राप्युदाहरति; ते सुह्मा वैतसीं वृत्तिमाश्रित्यैव निरामयाः अभवन्निति। का नाम वैतसी वृत्तिः? विविच्यते। नदीतटेषु दृश्यमानाः तृणविशेषा एव वेतसाः। तेषां सन्ति सुदीर्घा पुष्पकाण्डाः। ते काण्डाः प्रवाहप्रतिकूला न तिष्ठन्ति। किन्तु प्रवाहानुकूलं किञ्चिद् दूरं प्रसरन्ति। ततः परावर्तन्ते च। पुनरप्यनुकूलं प्रसरन्ति, परावर्तन्ते च। एवं प्रवाहानुकूलप्रवर्तनेन। तेषां न कापि हानिः जायते। यदि ते प्रवाहमभितिष्ठन्ति तर्हि ते भग्नाः भवेयुः। तादृशीं वैतसीं वृत्तिमेव सुह्मा अपि स्वीचक्रुः।

ततः स वङ्गान् जनपदान् प्राप। तत्रत्या नृपास्तु नौकादिभिर्जलयुद्ध-सामग्रीभिः सह तमन्वगच्छन्। स तान् स्वशक्त्यैव जिगाय। न तु कूट-तन्त्रादिकं प्रयुक्तवानिति भावः। ततः स गंगायाः प्रवाहेषु अथवा तानन्तरा विद्यमानेष्ववकाशेषु तत्र तत्र स्वकीयनामाङ्कितान् जयस्तम्भान् स्थापयामास।

पराजिताः वङ्गास्तु तस्य पादतले प्रणेमुः। तान् स धर्मविजयी रघुः तत्तत्स्थानेष्वेव प्रतिष्ठापयामास। पूर्वमुन्मूलिताः पुनः प्रतिष्ठापिताश्च ते पूर्वाधिकमवर्धन्त। किञ्च स्वेषां प्रतिष्ठापयित्रे स्वामिने रघवे रत्नादीनुप-

हारान् समर्पयामासुश्च । अत्रापि कविः विवक्षितमुपमया स्पष्टीकरोति । कर्षकाः प्रथमं व्रीहीणां बीजानि निबिडतया एकत्र वपन्ति । यदा तान्यङ्कुरितानि सस्यभावं भजन्ते, तदा तान्युत्खाय एकैकशः अन्यस्मिन् क्षेत्रे प्ररोपयन्ति । एवं पुनःप्रतिष्ठां लब्ध्वा एव ते वर्धमानाः फलन्ति च । फलेषु परिणतेषु ते नम्राश्च भवन्ति । तैः तानि फलानि रक्षित्रे कर्षकाय समर्प्यन्ते च । रघुणाऽपि एतादृशस्य कर्षकस्य सौभाग्यं लब्धमिति भावः ।

वङ्गान् जित्वा स दक्षिणां दिशं प्रातिष्ठत । तत्र उत्कला नाम जनपदो वर्तते । उत्कलानां वङ्गानां च मध्ये कपिशा नाम नदी प्रवहति । सा अगाधजला दुस्तरा चासीत् । तस्याः समुत्तरणार्थं स स्वसैन्य गजैः सेतुमाबबन्ध । गजानां पङ्क्त्या निर्मितेन तेन सेतुना स सेनासहितः एकस्मात् गजपृष्ठात् अन्यस्मिन् गजपृष्ठे पादं विन्यस्य विन्यस्य उत्कलान् प्राप । उत्कलराजास्तु रघोर्दर्शने एव विधेया अभवन् । विधेयीभूता विनीताश्च ते रघवे अनन्तरविजेयान् कलिङ्गान् गन्तुं मार्गं निरदिशन् । एवमुत्कलैः दर्शितमार्गः स जेता कलिङ्गानभिमुखीकृत्य ययौ ।

उत्कलेभ्यः कलिङ्गान् प्राप्नुवतो जनस्य प्रथमत एव महेन्द्रपर्वतः नेत्रगोचरीभवति । तस्यात्युन्नतं दुर्गमं च शिखरमारुह्य तत्रैव सेनां निवेशयामास । न तावत्पर्यन्तं कश्चिदपि जनः तस्य शृङ्गे पदमादधाति स्म । न स कस्यापि विधेयतां गतश्च । यथा कश्चिदाधोरणः अविधेयस्यानियन्त्रणीयस्य च गजस्य पृष्ठमारुह्य मस्तके अङ्कुशं निवेश्य तं नियन्त्रयति तथैव स धीरः महेन्द्रं स्ववशवदं चकार ।

महेन्द्रः तत्रत्यः प्रतापी राजा चाऽसीत् । स न विधेयतामापद्यत । रघुमहेन्द्रयोः भीषणं रणमभूत् ।

40 प्रतिजग्राह कालिङ्गः तमस्त्रैर्गजसाधनः ।
पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः ॥

वङ्गनृपाणां युद्धसामग्र्यः नौकाः आसन् इति कथितं खलु । अत्र तु कलिङ्गानां युद्धसाधनानि गजा अभवन् । गजसैन्यसमन्वितः स कलिङ्गराजः अस्त्रैः तं रघुं अभियोद्धुमारभत । गजस्योपरि स्थित्वा स धन्वी अस्त्रैः रघुं प्राहरत् । अत्र कविरुपमाति । यथा पुरा पर्वतः शिलाभिः इन्द्रं प्राहरत्

तर्पति । अत्र काचित् पौराणिकी कथा अनुसन्धेया । पुरा पर्वतानां पक्षा आसन् किल । ते पक्षिण इव उड्डीय यथेष्टं नगराणामुपरि तिष्ठन्तः बहुधा नाशं कुर्वन्ति स्म । एवं पर्वतैरुपद्रुह्यमाणा जना इन्द्रं शरणमगच्छन् । तदा इन्द्रः वज्रमादाय पर्वतानां पक्षान् छेत्तुमारभत । छेदनोद्यते शक्रे, पर्वताः शिलाभिः इन्द्रं प्राहरन् । तथैव कालिङ्गः रघुमभिजघान । यथा पर्वतानामायासो विफलोऽभवत् तथा कलिङ्गराजस्य यत्नोपि व्यर्थोऽभूदिति सारः ।

अन्वयः—शिलावर्षी पर्वतः पक्षच्छेदोद्यतं शक्रं इव गजसाधनः कालिङ्गः तं अस्त्रैः प्रतिजग्राह ।

प्रतिजग्राह = अभ्ययुध्यत । शक्रः = इन्द्रः । प्रति+ग्रह (लिट्) जग्राह जगृहतुः जगृहुः । 'ग्रह' धातोः रेफः ऋकारो भवति केषुचन रूपेषु । यथा—गृह्णाति, गृहीत्वा, गृहीत । ग्रहणं विग्रहः ग्रहीतुम् । गजाः साधनं यस्य सः । कलिङ्गानां राजा= कालिङ्गः, कलिङ्गराजः ।

---

कालिङ्गः पराजितः, रघुर्विजेता चासीत् । तदा रघुः पूर्वाधिकमशोभत ।

41 द्विषां विषह्य काकुत्स्थस्तत्र नाराचदुर्दिनम् ।
सन्मङ्गलस्नात इव प्रतिपेदे जयश्रियम् ॥

कलिङ्गराज्ये तयोरुभयोः भयङ्करे रणे वर्तमाने सति कालिङ्गः तस्य योधाश्च रघोरुपरि अस्त्राणि ववृषुः । तं शरवर्षं मङ्गलस्नानवत् स स्वीकृतवान् । मङ्गलस्नानं नाम विवाहात् पूर्वं क्रियमाणं कर्म । अत्र जयश्रिया सह रघोः विवाह आसन्नः । तत्पूर्वम् शत्रुभटास्त्रवर्षणैव मङ्गलस्नानं कृतम् । शत्रूणां शस्त्रप्रहारेण रघोः श्रीः उज्ज्वलतरा आसीत् इति भावः ।

द्विषां= शत्रूणाम् । विषह्य= प्रसह्य, सहनं कृत्वा । काकुत्स्थः= रघुः । नाराचदिनम्= शरवर्षम् । प्रतिपेदे =प्राप । दुर्दिनं इति पदस्य अत्र निरन्तरधारावर्ष इति लाक्षणिकोऽर्थः ।

अन्वयः—तत्र काकुत्स्थः द्विषां नाराचदुर्दिनं विषह्य सन्मङ्गलस्नात इव जयश्रियं प्रतिपेदे ।

द्वेष्टि इति द्विट् (क्विबन्तः) अत्रायं विशेषः । व्यञ्जन प्रत्ययेषु पदान्तः षकारः, सम्राज् इत्यस्य जकारश्च टकारो भवति । द्विष्–द्विट् । मुष् मुष्णाति इति मु = । विट् । सम्राज्–सम्राट् ।

| | | | | | |
|---|---|---|---|---|---|
| द्विट् | द्विषौ | द्विषः | सम्राट् | सम्राजौ | सम्राजः |
| द्विषं | द्विषौ | द्विषः | सम्राजम् | सम्राजौ | सम्राजः |
| द्विषा | द्विड्भ्याम् | द्विड्भिः | सम्राजा | सम्राड्भ्याम् | सम्राड्भि |

---

युद्धानन्तरं तस्य भटाः विजयोत्सवानन्दमनुबभूवुः ।

42 ताम्बूलीनां दलैस्तत्र रचितापानभूमयः ।
नालिकेरासवं योधाः शात्रवं च पपुर्यशः ॥

रघोर्विजयिनो भटा विजयोत्सवमाचरितुमारभन्ते । तत्र कलिङ्गेषु प्रभूतं नालिकेरासवो लभ्यते । अयोध्यानिवासिनां नालिकेरासवः सुदुर्लभ एव । कलिङ्गेषु तस्य सुलभतया तल्लाभे भटानां विजयाह्लादो द्विगुणीभवति स्म । तैः विजयानन्तरं रणसादमपोहितुं पानसन्नाहः सज्जीकृतः । तेषां पानभूमिः ताम्बूलपल्लवैरास्तीर्यत । तस्यामासीनाः ते भटाः नालिकेरासवं आकण्ठं पपुः । आसवपानेन सममेव ते शत्रूणां यशश्चापिबन् । यशसः पात्रपरिमितत्वात् धावल्यात् भटानां सम्मुखे अप्रत्यक्षीभावाच्च आसवसादृश्यं विभाव्यते ।

अन्वयः—तत्र योधाः ताम्बूलीनां दलैः रचितापानभूमयः नालीकेरासवं शात्रवं यशः च पपुः ।

रचिता आपानभूमिः यैः ते । (बहुव्रीहिः) शत्रु+अ (तद्धितः) शत्रुसम्बन्धि = शात्रवम् । युध्, युध्यते इति योधः, आयोधनं, युद्धं योद्धा, आयुधम् इत्यादयः 'युध्' धातोरुत्पन्नाः ।

---

बन्धनानन्तरं रघुः महेन्द्रनाथं निरपायमेव मुमोच ।

43 गृहीतप्रतिमुक्तस्य स धर्मविजयी नृपः ।
श्रियं महेन्द्रनाथस्य जहार, नतु मेदिनीम् ॥

रघुः राजधर्मार्थमेव दिग्विजयायोद्युक्त, नतु भूमेर्धनस्य वा लिप्सया । शत्रूणां विधेयतापादनमेव विजयस्योद्देश्यम् । नतु नतशिरस्कानां शिरश्छेदः । तस्मात् स धर्मविजयी रघुः पूर्वं महेन्द्रनाथमबध्नात् । पश्चात् विधेयत्वे व्यक्ते सति तं निरपायमेव व्यसृजत् च । विमोचनात् प्राक् तस्य राजश्रियं रघुरग्रहीत् । भूमिं तु तस्मै एव प्रत्ययच्छत् । अन्तःपुरमहिषीभिः धर्मपत्न्या च विना राज्ञां द्वे पत्न्यौ स्तः । एका राज्यश्रीः इतरा भूमिश्च । महेन्द्र–

नाथस्य राज्यश्रीरेव रघुणा अपाह्रियत, न त्वस्य भूमिरन्तःपुरस्त्रियो वा ।

अन्वयः—धर्मविजयी स नृपः गृहीतप्रतिमुक्तस्य महेन्द्रनाथस्य श्रियं जहार, मेदिनीं तु न जहार ।

पूर्वम् गृहीतः पश्चात् प्रतिमुक्तः= गृहीतप्रतिमुक्तः । पूर्वं लिखितं पश्चात् प्रेषितम्= लिखितप्रेषितं पत्रम् । पूर्वं भुक्तं ततः दग्धं=भुक्तदग्धमन्नं इत्येवं समासः । हृ-लिट् । जहार जह्रतुः जह्रुः । मेदिनी =भूमिः ।

---

कलिङ्गेभ्यः स पाण्ड्यादीन् दाक्षिणात्यान् जेतुं प्रतिष्ठते स्म ।

44 ततो वेलातटेनैव फलवत्पूगमालिना ।
अगस्त्याचरितामाशामनाशास्यजयो ययौ ॥

कालिङ्ग विजयानन्तरं पूर्वसमुद्रतीरेणैव रघुः दक्षिणाभिमुखः प्रतस्थे । समुद्रतीरं तु समृद्धफलैः पूगवृक्षैः निबिडमदृश्यत । विजयं तु स यत्नेन विनैवालभत ।

अन्वयः—ततः फलवत्पूगमालिना वेलतटेनैव अनाशास्यजयः सः अगस्त्याचरितां आशां ययौ ।

फलवतां पूगानां माला अस्यास्ति इति । माला+इन् =मालिन् । पूगः =क्रमुकः(Aricnut) । अनाशास्यः जयः यस्य. सः । अनाशास्यः अप्रार्थनीयः । तस्य जयो न प्रार्थनीय आसीत् । अप्रार्थित एव जयः तमुपागच्छत् इत्यर्थः । अथवा अनाशास्य इति पदं अनुत्तमपदवत् अत्र प्रयुक्तम् । अस्माद् उत्तमः नास्ति इति अनुत्तमः । सर्वोत्तम इत्यर्थः । अष्टाङ्गहृदयेऽपि अस्ति तादृशः प्रयोगः । 'त्वग्दोषकृदचक्षुष्यमिति तैलगुणवर्णने । अत्र अचक्षुष्यमित्यस्य अस्मात् परं चक्षुष्यं नास्तीत्येवमर्थः । तथात्रापि अस्मात् आशास्यः नास्तीति अनाशास्यः । आशां =दिशम् ।

अगस्त्येनाचरिता । अगस्त्यो नाम महर्षिः पुरा विन्ध्यपर्वतमुल्लंघ्य दक्षिणां दिशं प्रस्थितवान् । ततः स तत्रैव वसन्नास्ते, न तु ततः प्रतिन्यवर्ततेति पुराणकथा ।

---

स दक्षिणापथे कावेरीनदीतीरे सेनां न्यवेशयत् ।

45 स सैन्यपरिभोगेण गजदानसुगन्धिना ।
कावेरीं सरितां पत्युः शङ्कनीयामिवाकरोत् ॥

नद्यः पत्न्यः, समुद्रः तासां भर्ता च इति कविसंकल्पः । तत एव नद्यः समुद्रमभिगच्छन्ति । अत्र तु कावेरी पूर्वसागरस्य पत्नीष्वन्यतमा । तस्यां परपुरुषसङ्गमशंका समुद्रस्य जातेति कथ्यते । कथं ? रघोः भटाः स्नानपाना-प्लवनादिभिः तां नदीं सम्यगन्वभुंक्त । सेनागजानां मदजलेन तस्याः सलिलं परिमलमिलितमासीत् । सैन्यपरिभोगेण कलुषा मदजलेन सुरभिला च भूत्वा सा नदी स्वभर्तारं समुद्रं अभिजगाम । तदा समुद्रः तां परपुरुष-भुक्तामाशङ्कत ।

सैन्यानां परिभोगेण । गजानां दानेन सुगन्धिना । दानं = मदजलम्

अन्वयः— सः गजदानसुगन्धिना सैन्यपरिभोगेण कावेरीं सरितां पत्युः शङ्कनीयां अकरोत् इव ।

---

[अद्यतनं = Today's. प्रायशः कालवाचिभ्यः शब्देभ्यः 'तन' प्रत्ययो विधीयते । तदा तद् विशेषणं भवति । चिरम्–चिरन्तनः पुरुषः । ह्यः–ह्यस्तनं घृतम् । सेतुः = नदीनामेकस्मात् तीरात् अन्यस्मिन् तीरे प्रापणाय दार्वादिभिर्निर्मितो बन्धः । Bridge. प्राप्नुवतः = गच्छतः । आधोरणः = गजनियन्ता । धन्वी (न. पु. प्र. ए.) । धनुस् + विन् धन्वी = चापधारी उड्डीय —उड्डयनं कृत्वा । उड्डयनम् = पक्षिणां गगनेन गमनं । उपद्रूयमाणाः = पीड्यमानाः । छेत्तुम् = छिद् + तुम् । अभिजघान = अभिहतवान्, अर्थात् प्रहृतवान् । स्नानवत् = स्नानमिव । नाम इत्यव्ययं "=" अस्य चिह्नस्यार्थे क्वचित् प्रयुज्यते । विद्या नाम अनश्वरं धनं । आसन्नः = अन्तिकमागतः । रणसादं = युद्धश्रमम् । अपोहितुं = दूरीकर्तुम् । आस्तीर्यत = आस्तृता, प्रावृता । पात्रपरिमितत्वात् = पात्रे परिमितमस्तीत्यतः । उदयुङ्क्त = उद्यतोऽभूत् । व्यसृजन् = विसृष्टवान् । प्राक् = पूर्वं । आदेया = आदातव्या । न + तु + अस्य । पत्नीषु अन्यतमा = पत्नीषु एका । पर्वतेष्वन्यतमो हिमालयः । सम्यक् = यथेच्छम् । अन्वभुंक्त = भुक्तवान्

| अङ्गिक्रियाः | अङ्गक्रियाः | |
|---|---|---|
| | 1 | |
| केवल—नृपाः फलं अत्यजन् । | फलं त्यक्तवन्तो नृपः | कर्तरि |
| प्रयो—रघुः नृपैः फलं अत्याजयत् । | नृपैः फलं त्याजितवान् रघुः । | कर्तरि |
| केव—नृपैः फलं अत्याज्यत । | नृपैः त्यक्तं फलम् । | कर्मणि |
| प्रयो—रघुणा नृपैः फलं अत्याज्यत । | रघुणा नृपैः त्याजितं फलम् । | कर्मणि |
| | 2 | |
| केव—शिष्यः पाठं पठति । | पाठं पठन् शिष्यः । | कर्तरि |
| प्रयो—गुरुः शिष्यं पाठं पाठयति । | शिष्यं पाठं पाठयन् गुरुः | कर्तरि |
| केव—शिष्येण पाठः पठ्यते । | शिष्येण पठ्यमानः पाठः । | कर्मणि |
| प्रयो—गुरुणा शिष्यं पाठः पाठ्यते । | गुरुणा शिष्यं पाठ्यमानः पाठः | कर्मणि |

॥ अभ्यासः ॥

I यथोचितं प्रत्ययैः संयोज्य वाक्यानि लिखत । यथा—अयोध्या राजन् दशरथ अस्=अयोध्यायाः राजा दशरथः आसीत् ।

1) पिता दण्ड तनय प्रहरति । 2) अहं सिंह भय धाव । 3) सीता प्रवहन्ती नदी स्नान कृ । 4) वृक्ष पक्षिणः नीड रचय । 5) विद्य उत्कृष्ट धन लोक किञ्चित् न विद्यते ।

II लकारादीनि अर्थम् च लिखत । यथा—लिखतु—लोट्. पर. मध्य. बहु. Let him write.

1) भाषस्व 2) जायेरन् 3) बभौ 4) मन्यामहे 5) कुरुतः ।

III अधोनिर्दिष्टानां पदानां परिचयं दत्त । (यथा—विजिगीषा=जि। धातोः सन्नन्तः, वि उपसर्गः) ।

1) लिप्सते 2) लेखयति 3) मधुद्विट् 4) निपीय 5) पठत् ।

अद्य पठितानां पद्यानां सारं संस्कृते स्ववाक्येषु लिखत ।

IV अद्यतनपाठारंभे दत्तं पाठसंक्षेपं अनुवदत ।

---

## ॥ अभिधा लक्षणा व्यञ्जना ॥

अर्थबोधे तिस्रः शक्तयः अथवा वृत्तयः प्रवर्तन्ते इति कल्प्यते । ताः अभिधा लक्षणा व्यञ्जना चेति कथ्यन्ते । 'गजः' इत्यक्षरद्वयात् पाद-चतुष्कशुण्डादिविशिष्टः कश्चन बृहदाकारो जन्तुरस्माभिरवबुध्यते । अत्र 'गज' इति शब्दो 'वाचकः' अर्थात् 'अभिधायक' इति कथ्यते । गज इति

वाचकाद् अवबुध्यमानो जन्तुः 'वाच्यः' अर्थात् 'अभिधेय' इति च कथ्यते। वाचकशब्दस्य वाच्यवस्तुबोधने या शक्तिरस्ति सा 'अभिधा' शक्तिरित्यभिधीयते। तया शक्त्यैव अक्षरसमुदायात् वस्तूनां बोधो जायते। गृहादिभ्यः शब्देभ्यः तत्तद्वस्तुबोधने तादृशी शक्तिरेव प्रवर्तते। अथ लक्षणावृत्तिः। 'वङ्गानुत्खाय तरसा' इति पद्ये 'उत्खाय' इति पदस्य 'उत्खननं कृत्वा' इत्येवार्थो वाच्यः। उत्खननं तु तरुलतादीनां वा खनिजादीनां वा विषये एव युज्यते, न तु मनुष्याणां वंगराजानां विषये। अतः अत्र प्रकारणे 'वंगान् उत्खाय' इत्यस्य 'वंगनृपान् चिराय स्थिरप्रतिष्ठात् सिंहासनात् भ्रंशयित्वा' इत्यर्थं आपतति। एवं वाच्यार्थस्य अनुपपत्त्या अनौचित्याद्वा केषुचित् प्रकरणेषु शब्दस्य तत्संबद्धोऽन्योऽर्थः स्फुटति। सोयमर्थः लक्ष्यार्थः इत्युच्यते। लक्षकशब्दस्य लक्ष्यार्थबोधने या शक्तिरस्ति सा लक्षणेति कथ्यते। अत्र 'उत्खाय' इति लक्षकः शब्दः। वंगनृपाणां सिंहासनभ्रंशो लक्ष्यार्थः। अथ व्यञ्जनावृत्तिः- अत्रैव पद्ये लक्ष्यार्थबोधानन्तरं कश्चिदन्योऽप्यर्थः स्फुटीभवति। यथा कश्चित् नरः तृणादिकमुन्मूल्य दूरीकरोति तथा रघुरपि अनायासेनैव वंगनृपान् स्थानभ्रष्टानकरोत् इति। इयमनायासतैव अत्र व्यंग्यार्थः। उत्खायेति शब्द एव अमुं व्यंग्यार्थमपि जनयति। अतः स एव शब्दोऽत्र व्यञ्जकश्च। एवं च उत्खाय इति शब्दः उन्मूलनं इत्यर्थस्य वाचको भवति। स एव शब्दः स्थानभ्रंश इत्यर्थस्य लक्षकः अनायासता इत्यस्य व्यञ्जकश्च भवति। यथा कश्चित् एक एव पुरुषः पुत्रस्य पिता भवति भागिनेयस्य मातुलो भवति पत्न्या भर्ता च भवति तथा।

क्रमादुदाह्रियते [वेदपुरी (पोण्डिचेरी) नगरवर्णनम्]

अभिधा—ऋजुनिर्मलवीथिकावितानैररविन्दाश्रमपावनैरुपान्तैः
उपवारिधि शीतलार्द्रवातैः सरसा वेदपुरी विराजतीयम्।

लक्षणा—जलधेरतिभीषणाट्टहासैरतिशक्तैर्भुजदण्डपीडनैश्च
बत वेदपुरी निपीड्यमाना नहि निद्राति निशास्वपि प्रकामम्

व्यञ्जना—वणिगेष हि वंगवारिराशिः निरतो वेदपुरीप्रसाधनार्थम्
नवमौक्तिकवीचिका वितन्वन्नुमु हुरभ्येति चिरात्, न तृप्तिमेति।

# चतुर्विंशो दिवसः

अद्य तु ह्यः पठितस्य पद्यषट्कस्य सारः संग्रहीतव्यः । तेषु प्रथमे रघु-कालिङ्गयोरायोधनं खलु वर्णितम् । कलिङ्गराजः गजसैन्येन सह रघुमभियोद्धमागतः । तेन सह रघोः घोरं युद्धमजनि । कथम्? पुरा किल पर्वतानां पक्षच्छेदनार्थं इन्द्रः वज्रपाणिः समागतः । अभ्यागच्छन्तं शत्रुम् इन्द्रं दृष्ट्वा पर्वताः शिलाखण्डैः तं अभिजघ्नुः अर्थात् प्राहरन् । पर्वतानां शिलाखण्डैः प्रहारमगणयन् इन्द्रः गिरीणां पक्षं चिच्छेद । एवमत्रापि रणाङ्गणे संवृत्तम् । कालिङ्गस्य शरजालैः प्रहृतोऽपि रघुः तत् सर्वमप्यपरिगणयन् अयुध्यत । अन्ते पर्वतस्य या गतिरासीत् सैव कालिङ्गस्यापि संजातेत्युपमया व्यञ्जयति ।

एवं युद्धमन्तरा संभूतं शराणां वर्षणं स रघुः धीरं सोढवान् । अन्ते कालिङ्गे पराजिते, शरवर्षणं च समाप्तम् । शरवर्षादुन्मुक्तः स रघुः तदा मङ्गलस्नानं कृतवानिवाधिकं बभासे । राज्याभिषेकाद् विवाहाद् वा पूर्वं क्रिय-माणं स्नानमेव मङ्गलस्नानम् । सर्वौषधिभिः संस्कृतेन जलेनाभिषेक एव मङ्गलस्नानविधिः । शरवर्षः ओषधिसंस्कृतजलवर्ष इव तस्योल्लासाय श्रियै च सञ्जातः इति तस्य सर्वंसहत्वं अनेन स्पष्टीक्रियते ।

ततः तस्य भटाः विजयोत्सवमारभन्ते स्म । कलिङ्गेषु तांबूलीलता प्रभूतं दृश्यन्ते । तत्रत्यानां स्त्रीणां पुरुषाणां च ताम्बूलचर्वणं दिनचर्या-स्वन्तर्भवति । निरन्तरं सम्यक् चर्विततांबूलानां तेषां अतिरक्तौष्ठदन्त-जिह्वानां, हन्त! भीषणो मन्दहासोऽपि । तत्रत्या जनाः स्वेषां नित्योपयो-गार्थम् ताम्बूलीवाटिकाः सनिष्कर्षं पोषयन्ति । रघोर्भटास्तु तासां ताम्बूलीनां दलैः पानभूमिं विरचय्य तत्रासीनाः नालिकेरमद्यमाकण्ठं पपुः । तैः तु नालिकेरमद्यं अनास्वादितपूर्वमेव भवेत् । आसवेन साकं शत्रूणां कीर्तिमपि ते पपुः । तत्र यावल्लब्धं मद्यं शत्रूणां यशश्च तदा नावशिष्टमभूदिति भावः ।

कलिङ्गराजः रणान्ते गृहीतः, ततः रघोः दयालुत्वात् मुक्तश्च । कुतः सोऽपराधो विमुक्तः? इति चेदुच्यते । राजधर्म इति मत्वैव रघुः दिग्वि-जयमारब्धवान् । नतु हिंसार्थम् । धर्मिका राजानः शरणागतं पराजितं निरायुधं वा शत्रुं न हन्तुं उत्सहन्ते । तस्मादेव स कालिङ्गो विमुक्तः ।

किन्तु तस्य श्रियं रघुराददे । भुवा सह तं मुमोच । महेन्द्रनाथं निःश्रीकं विससर्जेत्यर्थः ।

कलिङ्गराज्यस्य पूर्वा सीमा वंगसमुद्र एव । समुद्रतीरेणैव विजयशीलो रघुः दक्षिणां दिशं जगाम । समुद्रतीरं तु फलस्तबकवतां क्रमुकाणां वाटिकाभिः निबिडं शीतलं चासीत् । सा दिशा अगस्त्याचरितेति पुराणे प्रथितम् । पुरा अगस्त्यो मुनिः विन्ध्यपर्वतमुल्लंघितवान् । स अधुनापि दक्षिणस्यां दिशि वसतीति पुराणप्रसिद्धम् ।

कावेरी नदी दक्षिणापथे मलयाचलादवतरति । सा पूर्वाभिमुखं प्रवहन्ती वङ्गसमुद्रेण सङ्गच्छते । रघुस्तस्याः तीरेषु सेनां निवेशयामास । सैन्यगजाः मदजलेनार्द्रगण्डाः तस्याः प्रवाहेषु बहुशो मज्जनोन्मज्जनान्यतन्वन् । तेन तस्या जलं मदजलसुरभिलं कलुषं चाभवत् । तथा सुरभिला कलुषा च सा नदी स्वभर्तुः समुद्रस्य निकटं जगाम । तदा भर्ता समुद्र एवमाशङ्कत । "किमियं परपुरुषेण सङ्गता? कालुष्येण परिमलेन चेयं परपुरुषेण परिभुक्तेव प्रतिभाति" इति ।

---

अथ अद्य पठितव्यानि पद्यानि व्याख्यायन्ते । कावेरीमुत्तीर्य मलयाचलसानुषु भटा विशश्रमुः ।

46 बलैरध्युषितास्तस्य विजिगीषोर्गताध्वनः ।
मरिचोद्भ्रान्तहारीताः मलयाद्रेरुपत्यकाः ॥

रघुः अवाचीं दिशं प्रतिष्ठासुः सैन्यैः सार्धं सुदीर्घं पन्थानं पश्चात् कृतवान् । अन्ततः स मलयपर्वतस्योपान्तं प्राप । पर्वतपरिसरास्तु मरिचवल्लीभिः रमणीयं अदृश्यन्त । तासु वल्लीपटलीषु हारीतनामकाः पक्षिविशेषाः मुहुर्मुहुरितस्ततो भ्राम्यन्त आसन् । तादृशीषु मलयाद्रेरासन्नभूमिषु सा सेना विश्रमसुखमनुभवितुं कंचित् कालमुवास । हारीताः नाम अल्पप्राणाः पक्षिविशेषाः मरिचानि खादितुं मरिचवल्लीपटलेष्वितस्ततः भ्राम्यन्ति ।

अन्वयः—गताध्वनः विजिगीषोः तस्य बलैः मरीचोद्भ्रान्तहारीताः मलयाद्रेः उपत्यकाः अध्युषिताः ।

'वस्' धातोः अधि इत्युपसर्गयोगे सप्तम्याः स्थाने द्वितीया भवति । यथा—

| | |
|---|---|
| 1 बालः गृहे वसति । | 1 बलानि उपत्यकासु अवसन् । |
| 2 बालः गृहं अधिवसति । | 2 बलानि उपत्यकाः अध्यवसन् |

अधि+वस्+इ+त =अधि उष् इत= अध्युषित । केषुचन् रूपेषु 'वस' धातुः 'उष्' भवति । वस्+इत्वा= उषित्वा । उषितवत् अध्युष्य etc विजेतुं इच्छुः विजिगीषुः । गताः अध्वानः येन सः । मरिचेषु उद्भ्रान्ताः हारीताः यासु ताः (बहुव्रीहिः) । मरिचं= black pepper. गताध्वनः= मार्गमतीतस्य । उपत्यका×अधित्यका । उपत्यका= valley अधित्यका= peak.

---

मलयाद्रेः सानुषु एलापरागाणां आधिक्यं सौलभ्यं च वर्ण्यते।

47 ससञ्जुरश्वक्षुण्णानामेलानामुत्पतिष्णवः ।
तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः ।।

रघुणा समाक्रान्ते एकैकस्मिन् प्रदेशे ये ये विशेषाः सन्ति तेषु द्विवान् एव कविः कथाकथनमन्तरा पाठकसमक्षं प्रदर्शयति । मलयाद्रेरुपत्यकासु एलावनानां सौलभ्यं विशिष्य वर्णनीयमास्ते । मलयपर्वतेषु एलावनानि सुलभं विद्यन्ते । भूमौ पतितानि तेषां फलानि सेनाश्वानां खुराघातैः संक्षोद्यमानानि अभवन् । क्षुण्णानां तेषां चूर्णानि अन्तरिक्षे उत्पेतुः । तानि चूर्णानि एलापरागसमानगन्धिषु मत्तगजमस्तकेषु संसक्तानि अभवन् ।

अन्वयः—अश्वक्षुण्णानां एलानां उत्पतिष्णवः फलरेणवः तुल्यगन्धिषु मत्तेभकटेषु ससञ्जुः ।

अश्वैः क्षुण्णाः= चूर्णिताः । क्षुद्+त= क्षुण्ण । अत्र तप्रत्ययो नकारः परिणमति । उत्पतन्ति इति उत्पतिष्णवः= उत्पतन्तः । तुल्यः गन्धः येषां ते= तुल्यगन्धिनः । मत्तानां इभानां कटाः । मत्ताः मदयुक्ताः । इभाः = गजाः । कटाः= गण्डाः । फलानां रेणवः । रेणवः= परागाः । सञ्ज्-लिट्-ससञ्ज ससञ्जतुः ससञ्जुः । संगः, सक्तिः, आसक्तिः प्रसंग आदयः सञ्ज् धातोरुत्पन्नाः । उत्+पत्+इष्णु—उत्पतिष्णु । इष्णु प्रत्ययस्य इन् प्रत्ययस्यैवार्थः उत्पतन्ति इति उत्पतिष्णवः । = उत्पातिनः । अलङ्करिष्णु-निराकरिष्णु, रोचिष्णु, वर्तिष्णु, वर्धिष्णु, सहिष्णुः, प्रभविष्णुः, इत्यादयः उकारान्ताः उत्पतिष्णु सदृशाः शब्दाः ।

---

मलयपर्वते चन्दनद्रुमाः सुलभाः सन्ति । तेषु सर्पाः वेष्टयन्ति इति प्रसिद्धम् ।

48 भोगिवेष्टनमार्गेषु चन्दनानां समर्पितम् ।
नास्रसत् करिणां ग्रैवं त्रिपदीच्छेदिनामपि ॥

अस्ति मलयाचलेषु चन्दनवृक्षाणां बाहुल्यम् । तेषां प्रकाण्डेषु सर्पाणां चिरकालपरिवेष्टनेन वलयाकाराः निम्नाः रेखाः संजाताः । रघोः सेनागजानां ग्रीवासु विद्यमाना रज्जवः तेषु वेष्टनमार्गेषु निबद्धाः । तथापि तेषां आभोगानां परिक्लृप्ततया अन्यूनाधिकतया च तेषु निबद्धानि ग्रीवाबन्धनानि न स्रस्तान्यभवन् । अजगराङ्कितेषु तथा तैः चिराय परित्यक्तेषु तेषु चन्दन-वृक्षप्रकाण्डेषु करिणां ग्रैवबंधनार्थं विशिष्य उद्बन्धनोच्छेदनादिरूपः क्लेशः तद्भटनां न सोढव्य आसिदिति भावः । चरणत्रयमाहृत्य शृखलिता अपि ते गजाः ताः शृंखलाः छेतुमपि शक्ता आसन् । तथापि चन्दनद्रुमाणां सुगन्धेन मुग्धास्ते गजाः तत्र निश्चलाः तस्थुरित्यर्थः ।

भोगिनां वेष्टनस्य मार्गः । भोगिन् = सर्प । वेष्टन मार्गः = सर्पाणां वलयरूपेण वृक्षेषु वासात् उत्पन्ना निम्ना रेखा । स्रंस्-लुङ् । अस्रसत् अस्रसतां अस्रसन् । स्रस्तमभूत् अथवा शिथिलबन्धमभूत् । त्रिपदी = पादत्रयमेकीकृत्य बद्धा रज्जुः । त्रिपदीम् छिनत्ति इति त्रिपदीछेदिन् । ग्रैवम् । (ग्रीवा+अ) ग्रीवा = कण्ठः । ग्रैवं = कण्ठबंधनम् ।

अन्वयः— चन्दनानां भोगिवेष्टनमार्गेषु समर्पितं त्रिपदीछेदिनामपि करिणां ग्रैवं न अस्रसत्

---

सूर्यादपि अधिकप्रतापो रघुरासीत् इति कथ्यते ।

49 दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥

मलयपर्वतमभिव्याप्य ये नाम पौरस्त्याः प्रदेशा अवर्तन्त तेषां शासकाः तदानीं पाण्ड्यराजा आसन् । ते सूर्यादपि प्रतापिनो विरेजुः । तेषां राज्य-स्योपरि चरन् सूर्यः स्वतो मन्दप्रतापो भवति । सूर्यः यदा दक्षिणायनं प्रविशति तदा तस्य प्रतापः स्वयं मन्दीभवति खलु । स तेजोमन्दीभावः पाण्ड्यानां तेजोऽभिभवाद् भवतीति कविरुत्प्रेक्षते । तादृशप्रतापिनोऽपि पाण्ड्याः रघोः प्रतापं सोढुं शक्ता नाभवन् । अत्र सूर्यः प्रतापवान्, पाण्ड्याः प्रतापवत्तराः, रघुः प्रतापवत्तमः इति सूचितम् ।

मन्दायते = मन्दः भवति, मन्दीभवति । विषेहिरे = असहन्त ।

अन्वयः—रवेरपि तेजः दक्षिणस्यां दिशि मन्दायते । तस्यामेव (दिशि) पाण्ड्याः रघोः प्रतापं न विषेहिरे ।

नामानि काभिश्चित्प्रक्रियाभिः धातुत्वं भजन्ते, एते 'नामधातव' इति कथ्यन्ते । ततः तिङन्तरूपाणि च जायन्ते । यथा—

मन्दं भवति = मन्दायते । दास इवाचरति = दासायते ।
पुत्रं इच्छति = पुत्रीयति । दासं इच्छति = दासीयति ।
अत्र नामान्त्यस्वरस्य विकारः यप्रत्ययश्च विशेषः ।
जनकः पुत्रस्य दासायते । दशरथः पुत्रीयति स्म ।
पुत्रस्य दासायमानः जनकः । पुत्रीयन् दशरथः यागं चकार ।

अत्रेदमवधेयम् । 'भवति', तथा 'इव आचरति' इत्याद्यर्थे निष्पन्नानि 'मन्दायते, चपलायते' इत्यादीनि रूपाणि आत्मनेपदे तथा इच्छतीत्यर्थे निष्पन्नानि 'पुत्रीयति, अन्नीयति' इत्यादीनि रूपाणि परस्मैपदे च प्रयुज्यन्ते ।

पुत्रं इच्छति = पुत्रकाम्यति । कृष्णः इवाचरति = कृष्णति । इत्यादयः केचन अन्ये प्रयोगविशेषा अपि सन्ति । ते विरला एव दृश्यन्ते । शब्दानामनुकरणे कटकटायते चकचकायते पटपटायमान इत्यादयः प्रयोगाश्च सन्ति ।

नामभ्यः विशेषणेभ्यश्च क्रियारूपनिष्पादनरीतिः प्रायशः अन्यभाषास्वपि दृश्यते । यथा आंगल्याम् ।

| | | | |
|---|---|---|---|
| 1) Trust | Entrust | 6) Strength | Strengthen |
| 2) List | Enlist | 7) Wide | Widen |
| 3) Courage | Encourage | 8) Real | Realise |
| 4) Little | Belittle | 9) Western | Westernise |
| 5) Bar | Debar | 10) Pure | Purify |

आङ्गल्यां तु पदानां पूर्वमुपसर्ग (prefix) योगेन अथवा पश्चात् प्रत्यय (suffix) योगेन च क्रियारूपाणि संपद्यन्ते इति विशेषः । हिन्दीभाषायामपि पश्यत । लाज, लजाना । शर्म, शर्माना । दुख, दुखाना ।

अधुनातन मद्रास प्रान्तान्तर्गत 'टिण्डिकल' 'टिनेवेली' इति ख्यातान् जनपदान् रघुः सम्प्राप्तः। तदा पाण्ड्याः स्वयं विधेया भूत्वा रघवे उपहारान् ददुः।

50 ताम्रपर्णीसमेतस्य मुक्तासारं महोदधेः।
ते निपत्य ददुस्तस्मै यशः स्वमिव सञ्चितम्॥

पाण्ड्याः रघुमभियोद्धुमुद्युक्ता नाभवन्। ते स्वयं रघोर्विधेयतामंगीचक्रुः। नम्रशीर्षास्ते रघुं प्रणिपेतुः, मुक्ताफलभूयिष्ठानुपहारान् तस्मै ददुश्च। तन्मुक्ताफलं तु महोदधेः ताम्रपर्णीसङ्गमस्थानात् अत्यल्पतया चिरायोपार्जितं च। तत् सर्वं चिरकालसञ्चितं स्वं यश इव ते रघवे समर्पयामासुः।

मुक्तासारम्=उत्तममौक्तिकम्। (pearls) संचितम्=आर्जितम्। 'चि' धातोः चयनं, समाहरणं, पुञ्जीकरणं चार्थः (To collect)। चिनोति चिनुतः चिन्वन्ति।

अन्वयः— ते ताम्रपर्णीसमेतस्य महोदधेः मुक्तासारं स्वं सञ्चितं यशः इव तस्मै ददुः।

ताम्रपर्णी=सह्यपर्वतात् महोदधिमभि प्रवहन्ती काचन नदी यस्याः सङ्गमस्थानात् विशिष्टानि मौक्तिकानि लभ्यन्ते। नि+पत्+य=निपत्य। सं+चि+त=संचितम्। सञ्चयनं, सञ्चयः, परिचयः, अपचयः इत्यादयः 'चि' धातोरुत्पन्नाः।

---

अथ पद्ययुग्मकं प्रौढैः छात्रैः स्वयं पठितव्यम् आस्वादितव्यम् च। रघुः मलयदर्दुरौ नाम पर्वतौ उल्लङ्घ्य सह्यपर्वतं प्रापेति कथ्यते।

51 स निर्विश्य यथाकामं तटेष्वालीनचन्दनौ।
स्तनाविव दिशस्तस्याः शैलौ मलयदर्दुरौ॥

52 असह्यविक्रमः सह्यं दूरान्मुक्तमुदन्वता।
नितंबमिव मेदिन्याः स्रस्तांशुकमलङ्घयत्॥

अस्यायं सारः। यथा कश्चिद् युवा पृथुलस्तनजघनां कांचन युवतीं संगम्य तृप्तिमाप्नोति तथैव रघुः दक्षिणदिशं प्राप्य तृप्तोऽभवत्। दक्षिणा दिग् उपभोगक्षमा युवतीव शीर्षमुत्तरतो विन्यस्य शेते। मलयदर्दुरौ पर्वतौ तस्याः स्तनौ इव राजतः। सह्यपर्वतस्तु तस्या नितम्बः। रघुः प्रथमं तस्याः स्तनद्वयाक्रमणमर्दनसुखं अन्वभवत्। ततः नितम्बमाचक्राम। वस्त्रं दूरतः

प्रक्षिप्तं । तद् वस्त्वमेव पश्चिमसागरः । एवं रघुः जैत्रयात्रामन्तरा रतिसुखमलभत ।

अन्वयः—असह्यविक्रमः सः तस्याः दिशः तटेषु अलीनचन्दनौ स्तनौ इव (स्थितौ) मलयदर्दुरौ शैलौ यथाकामं निर्विश्य मेदिन्याः स्रस्तांशुकं नितंबं इव (स्थितं) उदन्वता दूरात् मुक्तं सह्यं अलङ्घयत् ।

निर्विश्य = उपभुज्य । यथाकामं = यथेष्टम् । उदन्वान् = समुद्रः । मेदिनी = भूमिः । अंशुकं = वस्त्रं । आलीनचन्दनौ = चंदनलिप्तौ (स्तनौ) चन्दनवृक्ष सहितौ (पर्वतौ) ।

'यथाकामम्', काममनतिक्रम्य इति तस्य विग्रहः । अनतिक्रम्य इत्यस्य अनुसृत्य इत्यर्थं आपतति । तथा च काममनतिक्रम्य इत्यस्य काममनुसृत्य एत्येवार्थः । एवं अस्मात् विग्रहात् कामानुरूपमित्यर्थो जायते । काममनतिक्रम्य इति क्रियाविशेषणं खलु । तदा तयोः समस्तपदमपि क्रियाविशेषणं भवति । यथोचितं, यथोक्तं, यथार्हं, इत्यादीन्यपि एवं क्रियाविशेषणान्येव । उचितमनतिक्रम्य यथोचितम् इत्यादि तेषां विग्रहवाक्यम् ।

---

तस्य सैन्यं अपरान्तराज्येषु प्रससार ।

53 तस्यानीकैर्विसर्पद्भिरपरान्तजयोद्यतैः ।
रामास्त्रोत्सारितोऽप्यासीत् सह्यलग्न इवार्णवः ॥

रघुः पाण्ड्येभ्यः सह्यपर्वतमुल्लंघ्य अपरान्तान् अर्थात् पश्चिमसमुद्रतीरदेशान् प्राप । कालिदासस्य काले पश्चिमाम्बुधेस्तीरप्रदेशाः अपरान्ता इति व्यवह्रियन्ते स्म । अधुनातनाः केरलकर्णाटकमुम्बयीगुर्जरप्रान्ताः तदानीं अपरान्तेषु अन्तर्भूता आसन् । तेषु दक्षिणः प्रान्त एव केरला नाम । तत्र प्रविष्टा रघोः सेना सह्यपर्वतमालायाः आरभ्य आसमुद्रं व्याप्ता अभवत् । तासां सन्ततचलनात्मकत्वं शब्दायमानत्वं च सन्दर्शकानां एवं भ्रममुत्पादयामासतुः । 'पुरा परशुरामेण सह्यात् दूरमुत्सारितोऽयं समुद्रः पुनरपि सह्याद्रिसानुं उपागतः किम्?' इति । सा सेना समुद्र इव आसह्यासमुद्रं आकन्यागोकर्णं व्याप इति सारः । (तस्य अनीकैः विसर्पद्भिः अपरान्त जयोद्यतैः रामास्त्रोत्सारितः अपि आसीत् सह्यलग्नः इव अर्णवः । )

अनीकम् = सैन्यम् । विसर्पद्भिः = व्याप्नुवद्भिः । उत्सारितः = दूरं यापितः । अर्णवः = समुद्रः । लग्नः = संसक्तः ।

अन्वयः-अपरांतजयोद्यतैः विसर्पद्भिः तस्य अनीकैः रामास्त्रोत्सारितः अपि अर्णवः सह्यलग्नः इव आसीत् ।

वि+सृप्+अत् = विसर्पत् । (शवन्तः) सर्पः सर्पणं विसर्पः इत्यादयः सृप् धातोरुत्पन्नाः । उत्+सृ+इ+त = उत्शारित (प्रयोजकः क्तान्तः) ।

[चर्विततताम्बूलानां = ताम्बूलं चर्वितवताम् । सम्यक् = यथाविधि properly. अतिरक्ताः ओष्ठाः दन्ताः जिह्वाश्च येषां ते । आसीनाः = उपाविशन्तः । उच्यते = कथ्यते । (वच्+य+ते) निःश्रीकं = प्रतापरहितम् । स्तबकः = पुञ्जः गुच्छः । क्रमुकः = पूगः । निबिडं = सान्द्र । गण्डः = कपोलः । प्रतिभाति = seems. उट्टंकनं = to chisel. आभोगः = अवकाशः । स्रस्तं = अस्रसत्, slipped down. अजगरः = वन्यसर्पः । सोढव्यः = सहनीयः । सह्+त = सोढ । सोढ, सोढवान्, सोढा । अभिभव = पराभवः । ख्यात प्रशिद्ध । चिराय = चिरेण । आ सह्यसमुद्रं = सह्यादारभ्य समुद्रपर्यंतं । यथा आबालवृद्धम् । व्याप = व्याप्ता ।

॥ अभ्यासः ॥

I प्रत्ययादिकान् विघटयत । यथा-अभ्यगच्छत् = अभि+अ+गम्+अ+त् ।

1. विसर्पद्भिः । 2. क्षुण्ण । 3. समर्पितम् । 4. मंदायते । 5. विषेहिरे । 6. निपत्य । 7. उत्सारितः ।

II 47, 53 पद्ययोः पदानि विघटयत ।

III अधोनिर्दिष्टैः पदैः वाक्यानि रचयत ।

1. दक्षिणस्यां । 2. पेतुः । 3. ददुः । 4. अधिवसन्ति । 5. तीक्ष्णायते ।

IV अद्य पठितानां पद्यानां सारं संस्कृतभाषायां संक्षिप्य लिखत ।

V पाठारंभे दत्तं पद्यसंक्षेपं अनुवदत ।

---

# पञ्चविंशो दिवसः

ह्यः पठितचराणां पद्यानां सारः अत्र सुखबोधार्थं सङ्गृह्यते ।

महेन्द्रनाथविजयानन्तरं कावेरीमुत्तीर्य बहुदूरं दक्षिणाभिमुखं गत्वा मलयाचलप्रान्तान् रघुः प्रापेति कथ्यते । मलयसानुषु मरिचवल्लीनाम् सौलभ्यमस्ति । निबिडतया तरुषु लग्नानां तासां पटलेषु हारीताः पक्षिविशेषा भ्राम्यन्तो विद्यन्ते । पक्वानि मरिचानि स्वादूनि खलु । तत्खादनार्थमेव ते लतापटलेषु भ्राम्यन्ति । तादृशीषु मलयाद्रेरुपत्यकासु रघोः सैन्यानि निविविशिरे ।

ततः तत्र एलावनानां बाहुल्यं कविः सूचयति । मलयसानुवनेषु शुष्काणि एलाफलानि अधोविकीर्णानि सन्ति । अश्वानां खुराघातैः चूर्णितानां तेषां परागाः ऊर्ध्वमुत्पतन्ति । उत्पतितास्तु ते सैन्यगजानां मदजलार्द्रेषु गण्डेषु लग्ना अभवन् । सजातीयविश्वासादेव ते गजकटेषु ससञ्जुः । कुतस्तयोः सजातीयता? मदजलानां परागाणां च गन्धः समान एव । अतः परागा गजगण्डेषु पेतुः ।

ततः कविः चन्दनद्रुमाणां वन्यसर्पाणां च मलयाचलसानुषु सन्ततसाहचर्यस्य परिचयं ददाति । तत्र युगयुगान्तरजरठाः चंदनद्रुमाः सन्ति । अजगराः अथवा वन्यसर्पाः प्रायशः चन्दनद्रुमेषु वेष्टनं कृत्वा जीविकां निर्वहन्ति । चन्दनास्तु तेषां वासाय प्रियतमा वृक्षाः । ते शरीरेण वृक्षप्रकाण्डेषु संवेष्ट्य आस्यम् अधः प्रसार्य लंबमाना वर्तन्ते । यदा तेषामधोभागेन गजादयो वन्यमृगाः गच्छन्ति तदा तान् झटिति गृहीत्वा कबलयन्ति । एतेषु अवसरेषु तेषाम् आस्यानामेव इतस्ततः प्रसारणं चलनं वा भवति; न तु शरीरस्य । शरीरं तरुकाण्डे वेष्टितमेव वर्तते । तरवः यथाकालं वर्धन्ते । अजगराणां दृढतरवेष्टनात् तेषां शरीराभोगपरिक्लृप्ताः भागास्तु तथैव वर्तन्ते च । न ते वर्धन्ते । द्रुमाणाम् इतरभागापेक्षया ते कृशा निम्नश्च भवन्ति । काले गते, ते सर्पाः स्ववासवृक्षान् विहाय वृक्षान्तरमाश्रयन्ते । तदा तेषां वेष्टनस्थानानि स्पष्टीभवन्ति । ईदृशैः सर्पवेष्टनैः निम्नाङ्कवंतः चन्दनाः मलयपर्वतेषु प्रभूतं विद्यन्ते । तादृशानां चंदनवृक्षाणां अजगरवेष्टितेषु निम्नतलेषु सैन्यगजानां

कण्ठरज्जवः नाममात्रं निबद्धाः । गजास्तु मदमत्ता एवावर्तन्त । ते पादलयमाहृत्य बद्धां शृङ्खलामपि छेत्तुं शक्ताः । तथापि तेषां कण्ठरज्जवो न स्रस्ता अभवन् । चन्दनवनसौरभेण ते आकृष्टा निश्चलं तस्थुरिति भावः ।

पाण्ड्यनृपाणां प्रतापसान्निध्ये सूर्यस्यापि प्रतापो मन्दीभवति । दक्षिणायनकाले सूर्यः दक्षिणां दिशं विशति । तदा स मन्दप्रभो भवत्येव । तस्य प्रभामान्द्यस्य हेतुः पाण्ड्यप्रतापाधिक्यमित्यनुमीयते । एतेन पाण्ड्याः सूर्यादपि प्रतापवत्तरा इति सिद्धम् । ते पाण्ड्या अपि रघोः प्रतापं न सोढवन्तः । रघुरतिप्रतापः । ततोऽप्यल्पप्रतापाः पाण्ड्याः । ततोऽप्यल्पप्रतापः सूर्य इत्यर्थोऽत्र व्यङ्ग्यः ।

ते पाण्ड्याः रघवे बहूनि मुक्ताफलानि उपाजह्रुः । तानि तु मुक्ताफलानि तैः बहोः कालात् आरभ्य ताम्रपर्णीसङ्गमस्थानात् सञ्चितानि । पाण्ड्याः तत्सञ्चयं स्वं चिरार्जितं यशः इव तस्मै ददुः । यशसो धावल्यं कविलोकप्रसिद्धम् । मुक्ताफलानां धावल्यं तु लोकप्रसिद्धम् ।

ततो रघोः सैन्यानि अपरान्तप्रदेशान् विविशुः । पश्चिमपयोधेः तीरप्रदेशा एवापरान्ताः । तान् जेतुं तस्य सेना उदयुङ्क्त । सा च आसह्यसमुद्रम् आकन्यागोकर्णं च प्रससार । तदा संदर्शकानाम् एवमाशंका जाता । "पुरा परशुरामेण विदूरं यापितः समुद्रः किं पुनरपि सह्यपादं प्राप्तवान्" इति ।

---

अथ केरलवनिताः अनाथाः पलायन्त इति वर्ण्यते ।

64 भयोत्सृष्टविभूषाणां तेन केरलयोषिताम् ।
अलकेषु चमूरेणुश्चूर्णप्रतिनिधीकृतः ॥

अथ केरलानामाक्रमणप्रकारं वर्णयति कविः । केरलेषु ये ये राजानः वीराः योधाश्च आसन् ते सर्वे रघोः सैन्येन सह युद्ध्वा वीरोचितं मरणमवृण्वन् । तदा तेषामनाथा अशरणा धर्मपत्न्यः इतस्ततः पर्यधावन् । रक्षां लब्धुकामास्ताः धावनावसरे भूषणानि तत्यजुः । भूषणानां शिञ्जारवश्रवणात् शत्रवः अनुधाव्य आक्रमणं कुर्वीरन्निति भयं भूषणत्यागे हेतुः स्यात् । अथवा तेषां भारः पलायने क्लेशहेतुश्च स्यात् । एवं भूषणानि त्यक्त्वा धावन्तीनां केरलवनितानाम् अङ्गानि अनलङ्कृतान्यदृश्यन्त । तासां सौभाग्य-

येलासु अलकाः सदैव केतकीकुसुमपरागैः संस्कृताः आसन्। धावनसमये कथं तेषां वासचूर्णलब्धिः? नैव लभ्यते नूनम्। तथापि तासां अलकाः तदापि शून्याः नाभवन्। रघुः सैन्यादुद्भूतैः रेणुभिः तासां कुन्तलसंस्कारविधिं चकार।

भयेन उत्सृष्टाः विभूषाः याभिः ताः। उत्सृष्टाः=त्यक्ताः (उद्+सृज्+त) चम्वाः रेणुः। अलकाः=स्त्रीणां ललाटेषु लम्बमानाः चूर्णकुन्तलाः। अप्रतिनिधिः प्रतिनिधिः कृतः प्रतिनिधीकृतः (अभूततद्भावः) चूर्णानां प्रतिनिधीकृतः।चमूरेणुः चूर्णस्य प्रतिनिधिं अकरोत् इत्यर्थः। योषित्=स्त्री। चमूः=सेना।

अन्वयः—भयोत्सृष्टविभूषाणां केरलयोषिताम्, तेन चमूरेणुः चूर्णप्रतिनिधीकृतः।

| | पूर्णक्रियाप्रयोगः | अपूर्णक्रियाप्रयोगः |
|---|---|---|
| कर्त–स | चमूरेणुं चूर्णप्रतिनिधीचकार। | सः चमूरेणुं चूर्णप्रतिनिधीकृतवान् |
| कर्म–तेन | चमूरेणुः चूर्णप्रतिनिधीचक्रे। | तेन चमूरेणुः चूर्णप्रतिनिधीकृतः |

मुरलानद्यास्तटेषु केतकीकुसुमपरागाः रघोः भटानां प्रसाधने उपचक्रुः।

55 मुरलामारुतोद्धूतमगमत् कैतकं रजः।
तद्योधवारवाणानामयत्नपटवासताम्॥

मुरलानदी केरलेषु प्रसिद्धा 'पेरियार' इत्यनुमीयते। तस्याः तीरेषु केतकीकुसुमानि सुलभान्यासन्। तत्रत्यानि केतकीकुसुमरजांसि मारुतेन अन्तरिक्षे प्रसार्यमाणानि चासन्। रघोः सैनिकानां कञ्चुकाः केतकीकुसुमसुरभिणा मारुतेन सुरभिला अभवन्।

उद्धूतं (उद्+धू+त)=उपरि प्रसारितम्। वारवाणः=कञ्चुकं coat. पटवासः=सौरभ्याधायकं द्रव्यम्। गम् धातोः लुङि, अगमत् अगमतां अगमन् इति रूपाणि। अगच्छत् इति लङि रूपम्। केतक+अ= कैतक (तद्धितान्तः) केतकसंबन्धि।

अन्वयः—मुरलामारुतोद्धूतं कैतकं रजः तद्योधवारवाणानाम् अयत्नपटवासतां अगमत्।

मुरलायाः मारुतेन उद्धूतम्। तस्य योधानां वारवाणाः। न यत्नः अयत्नः। अयत्नेन सिद्धः पटवासः=अयत्नपटवासः। अयत्नपटवासस्य भावः=अयत्नपटवासता। सीता दीनतां अगमत् (गता)=सीता दीना अभवत् (अभूत्)।

रामः मृगत्वं प्राप = रामः मृगः अभवत् । रजः अयत्नपटवासताम् अगमत् = रजः अयत्न पटवासः अभवत् ।

---

तत्र तालीवनानां सेनाश्वकवचानां च शब्दः समान एवासीत् इति कथ्यते ।

56 अभ्यभूयत वाहानां चरतां गात्रशिञ्जितैः ।
वर्मभिः पवनोद्धूतराजतालीवनध्वनिः ॥

केरलेषु तत्र तत्र विशिष्य 'पालक्काट' परिसरेषु तालवृक्षाः निबिडतया दृश्यन्ते । इदं पद्यं तेषां तालवृक्षाणां परिचयं ददाति । रघोः कालेऽपि तालवनानि केरलेषु प्रभूतान्यासन् । तेन तालवनमार्गेण रघोः सेना पुरोगच्छति । सैनाश्वानां लोहकवचाः प्रयाणे सञ्जातैश्चलनैः शब्दायमाना भवन्ति । उपरितलेषु तालपत्राणि पवनाघातैः घरघर शब्दमुत्पादयन्ति । तदधोभागेन गच्छन्तोऽश्वा अधस्तात् च कवचानां घरघरशब्दमुत्पादयन्ति । तथापि सेनाश्वकवचशब्दाः तालपत्रेभ्य उत्पन्नान् शब्दान् अधश्चक्रुः । तालपत्रारवेभ्योऽपि उच्चैस्तराः अश्वकवचशब्दा इति भावः ।

अभि+अ+भू+य+त (कर्मणि, लङ्) = पराजीयत । वाहाः = अश्वाः । गात्रेषु शिञ्जितैः । शिञ्जद्भिः = शिञ्जारवं कुर्वद्भिः । वर्मभिः = कवचैः (वर्मन्) । राजतालीनां वनानि राजतालीवनानि । पवनेन उद्धूतानां राजतालीवनानां ध्वनिः । तालशब्दस्य स्त्रीत्वविवक्षायां ताली इतिरूपम् । तालवृक्षात् ईषद्भिन्नः द्रुमविशेषो वा ।

अन्वयः-चरतां वाहानां गात्रशिञ्जितैः वर्मभिः पवनोद्धूतराजतालीवनध्वनिः अभ्यभूयत ।

| पूर्णक्रियाः | | अपूर्णक्रियाः |
|---|---|---|
| कर्तृ-वर्माणि ध्वनिम् अभ्यभवन् | — | वर्माणि ध्वनिम् अभिभूतवन्ति । |
| कर्म-वर्मभिः ध्वनिः अभ्यभूयत | — | वर्मभिः ध्वनिः अभिभूतः । |
| कर्तृ-पवनः तालीवनम् उदधुनोत् | — | पवनः तालीवनम् उद्धूतवान् । |
| कर्म-पवनेन तालीवनम् उदधूयत | — | पवनेन तालीवनम् उद्धूतम् । |

---

अथ पुन्नागतरूणां खर्जूरीणां च बाहुल्यं वर्णयति ।

खर्जूरीस्कन्धनद्धानां मदोद्गारसुगन्धिषु ।
कटेषु करिणां पेतुः पुन्नागेभ्यः शिलीमुखाः ॥

अत्र अपरान्तेषु पुन्नागवृक्षाः सन्ति। "सुलताना चम्पा" इति हिन्दी भाषायां "पुन्ना" इति केरल्यां च ज्ञायमानो वृक्ष एव पुन्नागः। तेषां प्रसूनेषु मधुबाहुल्यात् भ्रमराः पिपासवः आपतन्ति। तेषां परिसर एव स्थितेषु खर्जूरीवृक्षप्रकाण्डेषु रघोः सेनागजाः बद्धाः आसन्। तेषां कटेभ्यः अर्थात् गण्डेभ्यः मदजलं प्रवहदासीत्। मदजलस्य गन्धः भ्रमरान् आकर्षत्। ततः ते भ्रमराः मधुमधुराणि पुष्पाणि विहाय ततोऽधिकसुरभिलेषु नागकटकुंभेष्ववपतन्।

पुन्नागः= नागकेसरः अत्युन्नतो वन्यवृक्षविशेषः। खर्जूरी =खजूरः Date tree. स्कन्धः= काण्डः। नद्धः =बद्धः। उद्गारः= उत्स्रवणं। कटः =गण्डः। शिलीमुखाः= भ्रमराः।

अन्वयः—खर्जूरीस्कन्धनद्धानां करिणां मदोद्गारसुगन्धिषु कटेषु शिलीमुखाः पुन्नागेभ्यः पेतुः।

खर्जूरीणां स्कन्धेषु नद्धाः। मदस्य उद्गारेण सुगन्धयः। नह् + त = नद्ध। (सन्नाहः परिणाहः पिनद्ध इत्यादयः नह् धातोरुत्पन्नाः) (करिन् नाग गज इभ वारण कुम्भिन् एते गज पर्यायाः) पेतुः= (पत् लिट. प. प्र. ब.) पपात पेतुः पेतुः।

---

अपरान्तमहीपालाः रघवे करं ददुः इति प्रस्तौति।

58 अवकाशं किलोदन्वान् रामायाभ्यर्थितो ददौ।
अपरान्तमहीपालव्याजेन रघवे करम्॥

परशुरामः पुरा समुद्रमभ्यर्थितवान्। 'हे समुद्र! अस्माकं निवासार्थ किञ्चित् स्थानं देहि' इति। समुद्रस्तु दयालुः रामस्य दीनदशामालोक्य तस्मै निवासार्थम् अवकाशं दत्तवान्। केरलदेशः परशुरामस्याभ्यर्थनया समुद्रेण दत्तः इति प्रसिद्धम्। तादृशः समुद्रः रघवे करमयच्छत् किल। समुद्रः स्वयं करं न दत्तवान्। किंतु अपरान्तमहीपाला इति व्याजेन। समुद्रः अपरान्तराजानां रूपं धृत्वा इत्याशयः। ते राजानः रत्नाकर इव संपन्नाः गंभीराश्च। तेषां विधेयता खलु समुद्रस्यापि विधेयीभावः। क्षात्रकुलान्तकः स रामः यस्य समक्षं याचकोऽभवत् स एव समुद्रो रघोर्दर्शनेनैव विधेयोऽभवत् इति भावः।

अवकाशः= स्थानम्, स्थलम्। करः= बलिः (सामन्तनृपैः सम्राजे दीयमानं धनम्। उदन्वान्= समुद्रः। व्याजः= कापट्यम्। व्याजेन= अलीकबोधमुत्पाद्य। अपरान्तानां महीपालाः इति व्याजेन।

अन्वयः—उदन्वान् (रामेण) अभ्यर्थितः सन् रामाय अवकाशं ददौ किल। स (उदन्वान्) अपरान्तमहीपालव्याजेन रघवे करं ददौ।

---

त्रिकूटपर्वतं रघुः जयस्तंभीचकार ।

59 मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणम् ।
त्रिकूटमेव तत्रोच्चैर्जयस्तम्भं चकार सः ॥

अस्त्यपरान्तेषु त्रिकूटो नाम पर्वतः। रघुः तं पर्वतमुन्नतं जयस्तम्भं चकार। स पर्वतः रघुणा जयस्तम्भीकृत इत्यर्थः। जयस्तम्भेषु विजेतारो राजानः स्वनामपराक्रमशासनादीनि उट्टङ्कयन्ति (Engrave) खलु। अस्मिन् स्तम्भेऽपि रघुः नामशासनादीनि आलेखयामास। कथं स आलेखयति स्म? सन्ति तस्य सेनायां मत्तगजाः। ते मदमसहमानाः तत्सानुप्रदेशेषु तत्र तत्र दन्तैरुत्किरन्ति स्म। एवमुत्कीर्णा रेखा नामविक्रमचरितशासनादिरूपतया अत्र निर्दिष्टाः। तथाहि, मत्तगजाः उट्टङ्कनकलापटवः शिल्पिनः इति कल्प्यते। तेषां दन्ताः टङ्कस्थाने कल्पिताः। सानुषु समुत्पन्ना रेखा रघोर्नामविक्रमशासनानि च। त्रिकूटो जयस्तम्भश्च।

अन्वयः— तत्र सः मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणं त्रिकूटमेव उच्चैः जयस्तम्भं चकार।

मत्ताश्च ते इभाश्च। मत्तेभानां रदनैः उत्कीर्णानि व्यक्तानि च विक्रमलक्षणानि यस्मिन् सः। (बहुव्रीहिः) मत्तेभः=मत्तगजः (मत्त+इभ) रदन: =दन्ताः। उत्कीर्ण=उट्टङ्कित (Engraved) क्वचित् क्तप्रत्ययस्य भावार्थो लभ्यते। गतं गतं इत्यत्र गमनागमनं इत्येवार्थः। न तु गतः आगतः इति। सूक्तं=सुवचनम्। एवम् उत्कीर्णम् इत्यस्य उत्किरणम् अथवा उट्टङ्कनं इत्यर्थः। उत्+कृ+त। टंकः=Chisel.

---

कतिचन अपूर्णक्रियाः (कृदन्ताः) स्थानव्यत्ययात् पूर्णक्रियभावं भजन्ते। अपूर्णक्रिया यदि विशेष्यपदेभ्यः पूर्वम् प्रयुज्यन्ते तर्हि ताः अपूर्णाः अर्थात् विशेषणान्येव भवन्ति। परंतु यदि ताः विशेष्यपदेभ्यः परं वाक्यानामंते प्रयुज्यन्ते तर्हि ताः पूर्णक्रियाणां कार्यम् निर्वहन्ति। कृदन्तेषु अर्थात् अपूर्णक्रियासु नामविशेषणार्हाणि कतिचन अपूर्णक्रियापदानि अत्र सङ्गृह्यन्ते।

| | प्रत्ययाः | अपूर्णाः | पूर्णाः | लकाराः | कालाः |
|---|---|---|---|---|---|
| I | शतृ (अत्) | लिखत् | लिखति | लट् | कर्तरि |
| | शानच् (आन) | भासमान | भासते | लट् | वर्त- |
| II | क्तवतु (तवत्) | लिखितवत् | अलिखत् | लङ् | |
| | | | अलेखीत् | लुङ् | कर्तरि |
| III | क्वसु (वस्) | लिलिखिवस् | लिलेख | लिट् | भूतः |
| IV | क्त (त) | धावित (अकर्म) | अधावत् | लङ् | |
| V | क्त (त) | लिखत | अलिख्यत | लङ् | कर्मणि |
| | | | अलेखि | लुङ् | भूतः |
| | | | लिलिखे | लिट् | |
| VI | a) य | लेख्य | | | कर्मणि |
| | b) तव्य | लेखितव्य | लिख्यताम् | लोट् | प्रकार |
| | c) अनीय | लखनीय | लिख्येत | लिङ् | |

अधोदत्ताः प्रयोगा अनुसन्धेयाः।

| | |
|---|---|
| ग्रामं गतः रामः...... | रामः ग्राम गतः (अगच्छत्) |
| पाठं पठितवती सीता...... | सीता पाठं पठितवती (अपठत्) |
| मया दृष्टः गजः......... | मया गजः दृष्टः (अदृश्यत) |
| तेन लेख्यं पत्रं ............ | तेन पत्रं लेख्यं or (लिख्येत, or |
| (लेखितव्यं, लेखनीयं), | लेखितव्यं, लेखनीयं), लिख्यताम्) |

अत्रेदमवधेयम्। भूतकाले प्रकारार्थे च अपूर्णक्रियाणां पूर्णक्रियास्थाने प्रयोगः साधारणः। न तथा वर्तमाने भविष्ये च। यथा 'रामः अगच्छत्' 'रामेण लिख्येत' इत्येतयोः स्थाने 'रामः गतः' 'रामेण लेखनीयं', इति सुलभं प्रयुज्यते; किन्तु 'रामः गच्छति' 'रामः गमिष्यति' इत्येतयोः स्थाने 'रामः गच्छन्' रामः गमिष्यन्' इति न प्रयुज्यते। तत्र रामः गच्छन् अस्ति' गमिष्यन् अस्ति (आस्ते) इत्येव प्रयोक्तव्यम्। भूतकाले प्रकारार्थे च क्वचन 'अस्ति' 'स्यात्' इत्यादिः 'अस्' धातोः अनुप्रयोगः प्रायशो दृश्यत एव। तथापि तत्रापि 'रामेण पुस्तकं पठितमस्ति' इत्यस्य 'रामेण पुस्तकमपठ्यत' इत्येव सामान्यतः तात्पर्यं प्रतीयते। 'रामेण

कर्तव्यमस्ति' इत्यस्य 'रामेण क्रियेत' इति संपिण्डितोऽर्थः । ते गजं दृष्टवन्त आसन् = ते गजं अपश्यन् । अयं प्रस्तावः केवलं सामान्यबोधायैवात्र कृतः । बोधस्याल्पाल्पाभेदमनुसृत्यैव सर्वास्वपि भाषासु प्रयोगाणां वैविध्यमपि प्रचारमविन्दत । I went, I have gone, I had gone. वह गया, वह गया हैं, वह गया था, इत्यादयः प्रयोगाः इतरभाषास्वपि भूतकालबोधे वैविध्यं जनयन्ति । एतं विषयमधिकृत्य विशेषाध्ययनमग्रे भविष्यति ।

[पठितचराः = पठितपूर्वाः । निविविशिरे = न्यविशन्त । खुरः hoof. लग्नाः = सक्ताः । ससञ्जुः = सक्ता अभवन् । जरठाः = वृद्धाः । आस्यम् = मुखम् । प्रसार्य = व्यादाय । झटिति = द्रुतं । कबलयंति = ग्रसंति । शरीराभोगपरिक्लृप्ताः = शरीरवेष्टनेन सीमिताः अर्थात् केवलं शरीरवेष्टनेन संबद्धाः । आभोगः = अवकाशः । विहाय = त्यक्त्वा । वृक्षान्तरं = अन्यो वृक्षः । रज्जुः = पाशः । आहृत्य = एकीकृत्य । सञ्चित = पुञ्जीकृत । धावल्यं = शुभ्रता । उदयुङ्क्त = उद्युक्तः अभवत् । पूतिगन्धयः = दुर्गन्धयुक्ताः । पलायन्त = अधावन् । कवचः = Armour. आघातः = आहननं, संघट्टनम् । देहि = यच्छ । ]

॥ अभ्यासः ॥

I अधोरेखाङ्कितानि पदयुग्मकानि एकपदे प्रयुङ्क्त । यथा ।

1) मया पत्रं लिख्यमानम् आस्ते । मया पत्रं लिख्यते ।
2) मया पाठः पठितः आसीत् । मया पाठः अपठ्यत ।
3) रात्रौ नक्षत्राणि दृश्यानि स्युः । रात्रौ नक्षत्राणि दृश्येरन् ।

1) पित्रा पुत्रः ताडितः आसीत् । 2) मया देवः पूज्यमान आस्ते । 3) तवाभिप्रायो मया स्वीकार्यः स्यात् । 4) त्वया अहं दृष्टः आसम् । 5) मया शीतं जलं पेयं स्यात् । 6) सीतया त्वं कथितः आसीः ।

II प्रत्ययाद्यंशान् विघटयत । यथा–सञ्जात—सं+जन्+त ।
1) अभ्यभूयत । 2) उत्सृष्ट । 3) अभ्यर्थितः । 4) उत्कीर्णं । 5) ददौ ।

III पठारम्भे दत्तं पद्यानां संक्षेपं अनुवदत ।

IV अद्य अधीतानां पद्यानां सारं संस्कृतभाषायां संक्षिप्य लिखत ।

# षड्विंशो दिवसः

अतीते दिवसे वयं रघुं केरलप्रान्तमुपागतं अपश्याम । यदा स ससैन्यः केरलान् प्राप, तदा तत्रत्या नृपाः तं अभ्ययुध्यन्त । युध्यमानास्ते वीरोचितां मृतिमवापुः । तदानीं तेषां अशरणाः स्त्रियः इतस्ततो भीताः पलायन्त । तासां अङ्गेषु विविधानि भूषणानि आसन् । पलायनवेलायां तेषां भूषणानां भारं वोढुं ताः न अशक्नुवन् । तासां धावनं भूषणशब्दैः अनुमाय सैनिकाः ताः अनुधावेयुः इति भीतिरन्यः प्रतिबन्धोऽप्यासीत् । तस्मात् ताः भूषणानि मार्गे तत्यजुः । एवं भूषारहितानां तासां सुन्दरीणां दर्शनम् रघुः नासहत । "अहो कियत् सौन्दर्यवत्य एतास्तरुण्यः ! आसां भूषण-शून्यानि गात्राणि कथमहं पश्यामि ? यथाशक्ति तासां अंगानि भूषयेयम् । इति चिन्तयन् स सहृदयो रघुः तासां अलकान् चमूरेणुभिः अलञ्चकार । सेनापरागाणां केतकपरागाणां च वर्णे सादृश्यं चास्ति ।

एवं तांस्तान् देशान् जित्वा स जेता केरलेषु 'पेरीयार' इति नाम्ना अधुना प्रख्यातायाः मुरलानद्याः परिसरं प्राप्नोति । सेयं नदी पुरा कोटि-लिंगपुरं (कोडुङ्ङल्लूर ) गत्वा पश्चिमसमुद्रम् अभिगच्छन्ती आसीत् । क्रिस्तोः पश्चात् चतुर्दशे शतके संभूता किल काचिदतिवृष्टिः । ततः सञ्जातेन जल-प्रलयेन प्रभूतसलिला सा नदी 'आलुवा, शिवमन्दिरस्यान्तिकादारभ्य द्विमुखी समजनि । नवीना शाखा अवाङ्मुखी भूत्वा दक्षिणया दिशा प्रवहन्ती 'कोचि (कायल्' इत्यधुना प्रसिद्धे जलाशये पपात । सैव शाखा क्रमशः परिपुष्टा अभवत् । पश्चिमया दिशा कोटिलिंगपुरीमभिगच्छन्ती प्राचीना शाखा तु प्रतिवर्षम् गाधा विरलजला चासीत् । क्रिस्तोः पश्चात् चतुर्दशशत-कात् पूर्वं केरलानां प्रमुख नौकाश्रयः कोटिलिंगपुरमेवासीदिति प्रसिद्धम् खलु । सैव नदी मुरलेति नाम्ना अत्र परामृश्यते । तस्या मुरलानद्याः परिसरेषु केतकनिकुञ्जानि निबिडतया प्ररोहन्ति । रघोः भटानां कञ्चुकाः स्वेदो-द्गमैः पूतिगन्धयः अजायन्त । तेषां दुर्गन्धिनां वारबाणानां सुरभीकरणविधिं तं परागा एव चक्रुः ।

अथ केरलेषु तालीवनानामाधिक्यमासूचयन् आयात्यनन्तरः श्लोकः । रघोः सैन्येषु अश्वाश्चरन्ति । तेषां गात्रेषु कवचाः सन्ति । अश्वानां

प्लुतिभूयिष्ठैः प्रयाणैः ते कवचाः परस्परसंघट्टनैः घरघरारवमुत्पादयन्ति । ते येन मार्गेण सञ्चरन्ति तेषां पर्यन्तभूषु राजतालीवृक्षा अवर्तन्त । राजताल्यस्तु तालवृक्षजातावन्तर्गताः विस्तृतपर्णवत्यश्च । तेषां पत्रैरेव केरलेषु ग्रामीणाः आतपत्रमारचयन्ति । तासां पत्राणि वैपुल्येन विस्तृततया च मन्दवातेऽपि परस्परं घर्षयन्ति । पत्राणां परुषतया तदा महान् घरघरारवो जायते । तान् राजतालीवनपत्रजातान् घरघरारवान् सैन्यश्वकवचजनितो घरघरारवः अधश्चकार । पत्रघर्षणशब्दादप्युच्चैस्तरः अश्वानां कवचशब्द इति भावः ।

केरलानतिक्रम्य पश्चिमपयोधितीरेणैव उत्तरां दिशं रघुर्गच्छति स्म । कस्मिंश्चित् खर्जूरीप्रचुरे प्रदेशे स सेनां न्यवेशयत । सेनागजाः खर्जूरीकाण्डेष्वबध्यन्त । तेषां मत्तगजानां गण्डेभ्यः मदजलं प्रवहदवर्तत । तेषां मदजलानां गंधः अन्तरिक्षे प्रसृतो बभूव । तेषां निकटप्रदेशेषु पुष्पिताः पुन्नागवृक्षाः अविद्यन्त । तेषां पुष्पाणि नितरां सुरभिलानि च । तेभ्यः कुसुमेभ्यो भृंगाः मधु पिबन्त आसन् । गजानां मदजलपरिमले आकाशे प्रसरति सति ते भ्रमराः पुन्नागपुष्पाणि विहाय करिणां स्रवन्मदजलेषु कुम्भेषु पेतुः । पुन्नागपुष्पेभ्योऽप्यधिकसुगन्धयः करिकटा इति व्यज्यते ।

अथान्ये केचन अपरान्तनृपाः रघवे करं दत्वा स्वविधेयतां अंगीचक्रुरित्यर्थम् भंग्यन्तरेण कथयति । परशुरामः पुरा समुद्रमुपगम्य एवं ययाचे । हे रत्नाकर, हे अगाधहृदय, मम निवासार्थं किञ्चित् स्थलं देहि । एतां अर्थनां निशम्य करुणार्द्रचित्तः स समुद्रः तस्मै निवासाय अवकाशं दत्तवान् । अत्र समुद्रः उत्तमर्णः (creditor) रामोऽधमर्णः (debtor) च अभूताम् । स एव रत्नाकरोऽधुना विधेयो भूत्वा रघवे करं ददौ । समुद्रः स्वयं प्रत्यक्षमागत्य न ददौ; किंतु अपरान्तराजरूपेणैव । अयमाशयः । अपरान्तराजाः तस्मै करं ददुः । ते नृपाः गाम्भीर्यात् रत्नाकरत्वाच्च पश्चिमसमुद्रेण प्रतिरूपा आसन् । तस्मात् नृपैः कृतं करदानं मर्यादापूर्वकं धारयता समुद्रेण कृतं करदानमिति अनुमीयते ।

रघुरपरान्तविजयानन्तरं त्रिकूटपर्वतमेव स्वं जयस्तम्भं चकार । न तु वङ्गविजयानन्तरमिव कृत्रिमं जयस्तम्भं निचखान । विजयस्तम्भेषु विजयिनो विजयवार्तायाश्च अक्षराण्यालेख्यन्ते खलु । अत्र त्रिकूटपर्वते कथमक्षरलेखनं कृतम्? उच्यते । रघोः सेनासु मत्तगजाः आसन् । तैः मत्तगज-

नागैः त्रिकूटसानवः दन्तैरुत्कीर्यन्ते स्म । तस्मात् तत्र तत्र रेखा दृश्याः सञ्जाताः । ताभिः रेखाभिरङ्कितः स त्रिकूटपर्वतः तस्य जयस्तम्भीभवितुं पुरा एव । ईदृशं जयस्तम्भं तत्र प्रतिष्ठाप्य स पश्चिमोत्तरां दिशं प्रातिष्ठासत ।

पश्चिमोत्तरेण मार्गेण स पारसीकान् प्राप ।

60 पारसीकांस्ततो जेतुं प्रतस्थे स्थलवर्त्मना ।
इन्द्रियाख्यानिव रिपूंस्तत्त्वज्ञानेन संयमी ॥

रघुरपरान्तविजयानन्तरं पश्चिमसमुद्रतीरेणैव उत्तराभिमुखो जगाम । रघोः काले (कालिदासकाले इत्येव सुवचम् ।) सिन्धुनद्याः पश्चिमतीरादारभ्य पश्चिमभागे विद्यमानाः प्रदेशाः पारसीकनाम्ना प्रसिद्धा आसन् । रघुः तान् पारसीकान् विजेतुं तदभिमुखो जगाम । अपरान्तेभ्यः जलमार्गेण स्थलमार्गेण च पारसीकान् गन्तुं शक्यम् । रघुः स्थलमार्गेणैव जगाम । मध्येमार्गं यदि केचन नृपाः अविधेयाः स्युः तेषामपि विधेयतापादनमेव स्थलमार्गप्रयाणस्योद्देश्यम् । जलमार्गे तु तस्यावकाशोऽपि न स्यात् । तां विजययात्रां कविरुपमाति । कश्चन योगी मोक्षमभिलषति । मोक्षलब्धेः विघातकारीण्येवेन्द्रियाणि । इन्द्रियाणि सदा इन्द्रियार्थानुधावनेन मनः चञ्चलं व्यग्रं च कुर्वन्ति । मनश्चाञ्चल्यादेकाग्रताभंगोऽपि जायते । एवं स योगी लक्ष्यात् व्यतिचलति । यदि कश्चन मोक्षरूपं लक्ष्यं प्राप्तुमिच्छति तर्हि प्रथमत एव इन्द्रियाणां विजयः कार्यः । एवमेव यदि रघुः दिग्विजयरूपं लक्ष्यं प्राप्तुमिच्छति तर्हि पारसीकाः जेतव्या एव । तदर्थम् स पारसीकान् प्रतस्थे । स्थलमार्गेण गतस्य तस्य विजय एव स्तुत्यर्हः । तथा तत्त्वज्ञानेन लभ्यो मोक्ष एव महत्तरः । न तु येन केन प्रकारेण लब्धः ।

पारसीकाः = persians. इन्द्रियाख्यान् = इन्द्रियनामकान् । संयमी = यतिः, मुनिः । वर्त्म = मार्गः (वर्त्मन्) । रिपून् + तत्त्वज्ञानेन ।

अन्वयः—ततः सः, इन्द्रियाख्यान् रिपून् जेतुं संयमी तत्त्वज्ञानेन इव, पारसीकान् जेतुं स्थलवर्त्मना प्रतस्थे ।

इन्द्रियं इति आख्या येषां ते । इन्द्रियस्वरूपाः इत्यर्थः । तत्त्वज्ञानं 'ब्रह्म सत्यं जगद् मिथ्या' इति बोधः ।

रघोः पारसीकगमनं पारसीकवनितानां मुखानि ग्लपयति स्म ।

61 यवनीमुखपद्मानां सेहे मधुमदं न सः ।
बालातपमिवाब्जानामकालजलदोदयः ।

पारसीकास्तु निश्चिन्ता निरपायाश्चावर्तन्त । तस्मात् तेषां स्त्रियो यवन्यश्च अर्थात् पारसीकवनिताश्च निरातङ्का आसन् । मधु पिबन्तीनां मधुरं जीवितं स्वदमानानां तासां मुखानि मदाधिक्येन अरुणान्यदृश्यन्त । तस्य कारणं तासां पतीनां निर्भयता अथवा निश्चिन्ततैव खलु । तत् स्वैरजीवितं रघुर्नासहत । सः तासां सुखजीवितभञ्जकः संवृत्त इत्यर्थः । उपमया उक्तं स्पष्टीकरोति । बालातपः खलु कमलानामरुणिम्नो (अरुणवर्णस्य) हेतुः । तमातपं यथा मेघः अपवार्य कमलानां सौभाग्यं नाशयति तथा रघुः पारसीकान् निहत्य तेषां पत्नीनां मुखशोभामपाहरदिति भावः ।

अन्वयः— अकालजलदोदयः अब्जानां बालातपमिव सः यवनीमुखपद्मानां मधुमदं न सेहे ।

यवनीमुखान्येव पद्मानि । मधुनः मदं । बालश्चासौ आतपश्च । न कालः अकालः । जलदस्य उदयः । अकाले जलदोदयः । । सेहे = असहत । सह (लिट् आत्मनेपदम्) सेहे सेहाते सेहिरे । अब्जं = कमलं ।

तत्पुरुषसमासस्य उपविभागाः अत्र संक्षिप्यन्ते ।

| | |
|---|---|
| यवनीनां मुखानि = यवनीमुखानि | (नामपदयोः समासः) |
| मुखानि पद्मानि इव = मुखपद्मानि | (उपमानोपमेययोः) |
| बालश्चासौ आतपश्च = बालातपः | (विशेषणविशेष्ययोः) |
| न कालः = अकालः | (निपातनामपदयोः) |
| गृहीतः च असौ प्रतिमुक्तः च = गृहीतप्रतिमुक्तः | (विशेषणयोः) |
| पुरुहूतस्य प्रीतये स्थापितः ध्वजः = पुरुहूतध्वजः | (मध्यमपदलोपः) |

एते सर्वेऽपि उत्तरपदार्थप्रधानाः समासाः । तस्मात् एते तत्पुरुषे अन्तर्भवन्ति । अन्येपि केचन सन्त्येव । तत्पुरुषस्य एतादृशाः विविधाः विभागाः सन्तीत्येवात्र अवधार्यम् । प्रायशः अर्थबोधाय इयतालम् ।

---

पारसीकैः सह अतिभीमं युद्धमजायत ।

62 संग्रामस्तुमुलस्तस्य पाश्चात्यैरश्वसाधनैः ।
शाङ्र्गकूजितविज्ञेयप्रतियोधे रजस्यभूत् ॥

पश्चात्य, यवन, हूणशब्दाः प्रायशः वैदिकमतानवलम्बिनां सिन्धुनद्याः आरभ्य पाश्चात्यजनपदवासिनां पर्यायतया अत्र प्रयुक्ताः। रघुः यवनैः सह अयुध्यत। यवनानां युद्धसामग्रीषु प्रधानभूताः अश्वाः सन्ति। ततः तस्य तुरगसैन्यैः सह योद्धुं अवसरो लब्धः। तत् युद्धं तु रेणुपटलीभिः संकुलमभूत्। प्रतिभटाः कुत्र तिष्ठन्तीति द्रष्टुमपि ते परस्परं न पारयन्ति स्म। पुनस्ते तत् कथमजानन्? समराङ्गणेषु प्रोत्साहनार्थं शार्ङ्गः कूज्यते। तस्य शार्ङ्गकूजनस्य श्रवणेनैव प्रतिभटाः कुत्र तिष्ठन्ति, कुतस्ते आक्रामन्ति इति ज्ञानं पक्षद्वयस्याप्यभूत्।

सग्रामः =रणम्। तुमुलः =संकुलः, प्रचण्डः। अश्वा एव साधनानि येषां ते। शार्ङ्गः =महिषादीनां शृङ्गैः विरचितं किञ्चन वाद्योपकरणं। शाङ्गाणां कूजितं शार्ङ्गकूजितम्। शार्ङ्गकूजितेन विज्ञेयाः प्रतियोधाः यस्मिन् तत् (रणम्)।

अन्वयः—अश्वसाधनैः पाश्चात्यैः शाङ्गकूजितविज्ञेयप्रतियोधे रजसि तस्य तुमुलः संग्रामः अभूत्।

पुरातने काले उक्षमहिषादीनां शृङ्गेषु यथास्थानं सुषिरान् विधाय मुख-वायुप्रवहणेन जनाः नादमुत्पादयन्ति स्म। अद्यापि केरलेषु पञ्चवाद्यमेलादिषु शार्ङ्गनादो मुखरः श्रूयते। अधुना तु स लोहनिर्मित इत्येव भेदः। तथापि तस्य अद्य शृङ्गपर्यायेण 'कोम्प्' इति पदेनैव मलयाले व्यवहारो भवति। प्रतियोधाः= प्रतिभटाः। रजः =धूलिः। विज्ञातुं योग्याः= विज्ञेयाः (वि+ ज्ञा+य) कर्मणि प्रकारार्थः (ज्ञातव्यः)। अत्र कश्चिद् विशेषः। अस्मिन्नर्थे विधीयमाने 'य' प्रत्यये परे आकारान्तो धातुः एकारान्तः सम्पद्यते।

| | |
|---|---|
| पा—पेय, पातव्य। | मा—मेय, मातव्य। |
| गा—गेय, गातव्य। | दा—देय, दातव्य। |
| धा—धेय, धातव्य। | हा—हेय, हातव्य। |

To be drunk, to be sung इत्यादयोऽर्थाः।

---

रघुः यवनानां शिरांसि छित्वा भूमिं आच्छादयामास।

63 भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम्।
तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव॥

श्मश्रूणि नाम मुखरोमाणि। यवनाः श्मश्रुलाः। ते मुखरोमाणि वर्द्धयन्ति। न ते क्षुरन्ति। युद्धे रघुणा तेषां श्मश्रुलानि शिरांसि भल्लैः

आयुधविशेषैः निकृत्तानि । तानि भूमौ निपेतुः । निपतितानि तानि शिरांसि मधुमक्षिकाभिर्व्याप्तानि क्षौद्रपटलानीव अदृश्यन्त । तादृशैः शिरोभिः तद्रणाङ्गणं रघुराच्छादयामास ।

सरघाः = मधुमक्षिकाः (bees) क्षौद्रपटलं = मधुपटलं (honey comp) भल्लाः = आयुधविशेषाः । अपवर्जिताः = निकृत्ताः, छिन्नाः । तस्तार = आच्छादयामास । मही = भूमिः ।

अन्वयः—सः भल्लापवर्जितैः श्मश्रुलैः तेषां शिरोभिः सरघाव्याप्तैः क्षौद्रपटलैः इव महीं तस्तार ।

श्मश्रु अस्य अस्तीति श्मश्रुलम्, श्मश्रुमत् (bearded) । मत् प्रत्यय-स्यार्थे अयं 'ल' प्रत्ययः पाक्षिको विधीयते । पांसुल, मांसल, श्रील, धाराल पक्ष्मल आदयः शब्दाः एवं निष्पन्नाः । तस्तार (स्तृ लिट्) तस्तार, तस्तरतुः तस्तरुः । विस्तारः विस्तरः, आस्तरण, प्रस्तरः, विस्तृत, आस्तृत' आदयः अस्मादुत्पन्नाः ।

---

शिष्टा यवनाः रघुं शरणं जग्मुः ।

64 अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः ।
प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् ॥

तस्मिन् युद्धे बहवो मृताः । शेषाः त्यक्तयुद्धोद्यमाः रघुं शरणं प्रापुः । ते सदा शिरस्त्राणवन्तः सन्ति । रघुणा विजितास्ते यवनाः शिरस्त्राणमपनीय विजेतारं रघुमेव शरणीचक्रुः । शिरस्त्राणापनयनं विधेयतासूचकं किल । रघोस्तु तेषां शरणं गतानां वधे प्रतिपत्तिर्नासीत् । सूर्यवंशसंभूतः स उदारो दयालुश्च । शत्रूणां प्रणिपात एव तेषां कोपस्य प्रतिकारः । न तु तेषां अशरणा-नां हत्या । महान्तः परकीयमौद्धत्यं न सहन्ते । तेषामानान्दमयं जीवितमभीष्ट-मेव ।

अपनीत = दूरीकृत । शिरस्त्राणं = उष्णीषं, turban. संरभः, = कोपः । हि = खलु ।

अन्वयः—शेषाः अपनीतशिरस्त्राणाः तं शरणं ययुः । महात्मनां संरंभः प्रणिपातप्रतीकारः हि ।

अपनीतानि शिरस्त्राणानि यैः ते । प्रणिपात एव प्रतीकारः यस्य सः । महान्तः आत्मानः येषां ते । अत्रास्ति विशेषः । महत्+आत्मा इत्यस्य समस्तपदं महदात्मा इत्येव भवेत् । कथम् महात्मा इति? उच्यते । 'महत्' इति पदं यदा विशेषणतया समस्यते तदा 'महा' इति आकारान्तो जायते । यदि नामतया समस्यते तर्हि महद् इत्येव भवति । यथा-महान् च असौ पुरुषः च महापुरुषः । महतां सान्निध्यं महत्सान्निध्यम् ।

अप+नी+त । शिरस्+त्रा+अनं । प्र+नि+पत्+अ ।

योधाः मधु निपीय युद्धक्लममपनिन्युः ।

65 विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमम् ।
आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु ॥

युद्धमवसितम् । सर्वमपि प्रशान्तम् । किन्तु भटानां युद्धक्लेश एवावशिष्टः । तमप्यपनेतुं ते भटा उदयुञ्जन्त । द्राक्षाफलादुत्पाद्यमानं स्वादिष्ठं मद्यं तत्र प्रभूतं लभ्यते । चर्मभिर्निर्मितान्यत्युत्तमानि आस्तरणान्यपि तत्र सुलभानि । द्राक्षावलयैः निबिडा वाटिका अपि तत्र विद्यन्ते । तेषु मृद्वीकलतावलयेषु उत्कृष्टचर्माण्यास्तीर्य आसीनाः द्राक्षाफलोत्पन्नं मद्यरसमास्वदमानास्ते रघोः भटाः युद्धक्लममपानयन् ।

अजिनं =चर्म । अजिनरत्नानि =उत्कृष्टचर्माणि । विनयन्ते स्म =अपानयन्, दूरीचक्रुः । (वि+नी) विनयः, अपनयः, प्रणयः, परिणयः, नयन, अनुनयः आदि 'नी' धातोरुत्पन्नाः ।

अन्वयः—तद्योधाः आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु (आसीनाः) मधुभिः विजयश्रमं विनयन्ते स्म ।

आ+स्तृ+त =आस्तीर्ण =आवृत, आच्छन्न । आस्तीर्णानि अजिनरत्नानि यासु तासु । रत्नशब्दोऽत्र उत्कृष्टार्थे प्रयुक्तः । यथा-राजरत्नम् = उत्कृष्टो राजा ।

[पलायन्त = अधावन् । चमूरेणुः = सेनापरागः । समजनि = समजायत, सञ्जातः । आवाङ्मुखी = दक्षिणाभिमुखी । गाधा+अगाधा । निकुञ्जः = लतापुञ्जः । प्लुतिभूयिष्ठैः = उत्पतनप्रचुरैः, उत्प्लवनाधिकैः

सरन्ति = प्रयान्ति । घर्षयन्ति = संघट्टयन्ति । स्रवन्मदजलेषु = मदजलं स्रवत्सु । कुम्भेषु = मस्तककुम्भेषु । निशम्य = श्रुत्वा । सानुः = उपत्यका । शक्यं = साध्यं । मोक्षलब्धेः विघातकारीणि एव इन्द्रियाणि । इन्द्रियार्थः = इन्द्रियविषयः । व्यग्रं = विवशं । स्तुत्यर्हः = स्तोतुमर्हः, प्रशंसनीयः । ग्लपयति = निष्प्रभीकरोति । अरुणानि = रक्तवर्णानि । अपवार्य = आवृत्य । इयता = एतावता । पारयन्ति = प्रभवन्ति, शक्नुवन्ति । त्यक्तयुद्धोद्यमाः = युद्धोद्यमं त्यक्तवन्तः । हत्या = वधः । चर्मभिः निर्मितानि अस्तृतानि । मृद्वीका = द्राक्षा । आस्तीर्य = परिधाय ।]

॥ अभ्यासः ॥

I निर्दिष्टरीत्या विपरिणमयत । यथा—सः हसति स्म = स अहसत् । सीता संभाषते स्म = सीता समभाषत ।

1 रामः सीतां परिणयति स्म । 2 कन्या दीपं प्रज्वालयति स्म ।
3 गुरुः शिष्यं अनुमोदते स्म । 4 सुहृदः नाटकं समीक्षन्ते स्म ।
5 मातरः पुत्रीषु स्निह्यन्ति स्म । 6 अहं वार्ताम् अवगच्छामि स्म ।

II पदानि संयोज्य समासानां संज्ञां लिखत—यथा— जगतां पतिः = जगत्पतिः, तत्पुरुषः । शक्तिं अनतिक्रम्य = यथाशक्ति, अव्ययीभावः । 1 अरुणं च तत् अंबुजं च । 2 विज्ञानस्य निधिः । 3 सुखं च दुःखं च । 4 कालमनतिक्रम्य । 5 महद् बलं यस्य सः ।

III यथोचितं पूरयित्वा वाक्यानि रचयत—

1 रघुः.......जेतुं...... 2 सः यवनीमुखपद्म मधुमद न सह्
3 जलद अब्ज बालातप न सह् । 4 रघु भट पाश्चात्य सह युध्
5 तद्योधाः......आसीना......विनयन्ते स्म ।

IV अद्यतनपाठारम्भे दत्तं पाठसंक्षेपं अनुवदत ।

V अद्य पठितानां पद्यानां संक्षेपं संस्कृतभाषायां लिखत ।

---

# सप्तविंशो दिवसः

अपरान्तविजयानन्तरं पारसीकान् जेतुं रघुः प्रस्थातुकाम आसीदिति 'पारसीकांस्ततो जेतु' मित्यादिना पद्येन वर्णयति । अपरान्तेभ्यः पारसीकान् गन्तुं द्वौ मार्गौ स्तः। एको जलमार्गः। इतरस्तु स्थलमार्गः। स स्थलमार्गमेवावालंबत। यदि जलमार्गेण गम्यते तर्हि तस्य पराक्रमस्य प्रकाशनावकाशो न स्यात्। कुतः ? । समुद्रे न कश्चनापि तमभियोद्धुमागमिष्यति। पारसीकप्राप्तिपर्यन्तं तेन नौकायां निद्राणेनैव भवितव्यम् । पराक्रमस्यावसरो न स्यात्। स्थलमार्गेण यात्रायां तु इतस्ततो नृपैः सह योद्धुमवसरो लभ्येत। ततः स जलमार्गं विहाय स्थलमार्गेणैव प्रातिष्ठत। तस्य मार्गस्य प्राधान्यं कविरुपमया स्पष्टीकरोति। कश्चित् संयमी वर्तते इति कल्पयामः। स इन्द्रियरूपान् शत्रून् जेतुं प्रयतते। स स्त्रियः परिहरति। भोग्यवस्तूनि न स्वीकरोति । सिनेमाशालादिकान् इन्द्रियसन्तर्पकान् सर्वानपि दूरं त्यजति । यावत् तत्त्वज्ञानं न जायते तावत् एते परिहरणोद्यमाः सर्वेऽपि व्यर्था एव। पुनरप्यासक्तिरवशिष्यते। यदा स तत्वज्ञानरूपेण मार्गेण इन्द्रियान् निग्रहीतुमुद्युङ्क्ते तदा तेन विजयो नियतमेव लभ्यते। तथा च, स्थलमार्गेण गत्वा पारसीकानां विजय एव शाश्वतो विजयः, अन्यथा तु क्षणिक एवेति च सूचयति ।

अथ 'यवनीमुखपद्मानां' मिति द्वितीयः श्लोको विव्रियते। अत्र यवनशब्दमधिकृत्य किञ्चिद्वक्तव्यमस्ति। यवनशब्दः पारसीकानां पर्यायतया अत्र प्रयुक्तः। वैदिकेतरधर्मावलंबिनः पाश्चात्यदेशेभ्यः समागताः जनगणाः सर्वेऽपि यवनशब्देन व्यवह्रियन्ते स्म। वस्तुतस्तु ते विभिन्नान् वर्गान् प्रतिनिदधुः। ग्रीक्प्रदेशात् अलक्सेन्द्रनामकः कश्चिद्विजिगीषुरागतः। स च तदनुयायिनश्च यवना इति व्यवाह्रियन्त। 'होरा' इति ज्योतिश्शास्त्रसारभूतस्य ग्रन्थस्य निर्माता कश्चिद् यवनाचार्यः। अरेबियानिवासिनः तत्संबधिनो माहम्मदा अपि भारतीयानां पक्षे यवना एव। भागवतेऽप्यस्ति कश्चिद् यवनः। तेनापि द्वारकातः पाश्चात्येन सनातनधर्ममनंगीकुर्वता केनचित् गणनायकेन भवितव्यम्। अस्तु, कालिदासः अत्र पारसीकान् यवनपदेन परामृशति ।

पारसीकाः पारलौकिसुखेषु न विश्वसन्ति। लौकिक सुखमेव तेषां परमं लक्ष्यम्। मधुपानं विनोदः सुखानुभूतिः, पुनरपि पानं विनोदः विषयसुखानुभूतिः अयमेव तेषां जीवितक्रमः। स्वभर्तृजनान् सर्वदा अनुसरन्तीनां तत्रत्यानां युवतरुणीनां कपोलतलानि सन्ततमधुपानशीलतया अरुणान्यदृश्यन्त। तदरुणिमानं रघुः न सेहे। तस्यारुणिम्नः कारणं तु तासां सनाथत्वं खलु। नाथास्तु शत्रुराहित्यात् निश्चिन्ताश्चावर्तन्त। ततो यवनीनां मधुमदसंजातस्य मुखारुणिम्नो मूलहेतुः तासां पतीनां निश्चिन्ततैव। सा तु निश्चिन्तता 'नास्माकं कोपि शत्रुर्वर्तते। अस्मत्साम्राज्यं तु अन्यैर्दुर्ग्रासकमेव' इति विश्वासादुत्पन्ना। यवनीमुखेषु दृश्यमानात् मधुमदारुणिम्नः तत्पतीनां अनन्यविधेयत्वरूपं दर्पम् रघुरनुमाति स्म। तं दर्पम् स विजिगीषुर्न सेहे इत्यर्थः। अत्र कविरुपमया उक्तं स्पष्टीकरोति। कमलानि सूर्योदये विकसन्ति खलु। बालातपालेपात् तान्यतितरामरुणानि भवन्ति। अकालमेघः कुतोप्याकाशे प्रत्यक्षीभवति। मेघः विकसन्ति कमलानि दृष्ट्वा एवं चिन्तयति 'अहो! एषां सौन्दर्यावलेपः। एतेषामीदृशसौभाग्यवर्धकः सूर्यः एव खलु।' एवं विचिन्त्य मेघः सूर्यं तर्जयति। 'पश्य पश्य रे सूर्य! त्वमधुना न भविष्यसि'। इत्युक्त्वा स सूर्यमाच्छादयति। ततः स्वभर्तुरपायाशङ्कया कमलानि म्लानानि भवन्ति। तथैव यवनतरुणीमुखान्यपि म्लानान्यभवन्।

भारतीयानां बलं तु गजसैन्यभूयिष्ठं भवति। पारसीकानां अश्वभूयिष्ठं च। पारसीकाः अश्वसैन्यैः सह रघुमभ्ययुध्यन्त। तद् युद्धं तु धूलिभिः संकुलमासीत्। पक्षप्रतिपक्षसैन्ययोर्मध्ये चमूनां सान्द्ररेणुप्रसरात् ते परस्परं द्रष्टुं न पारयन्ति स्म। पुनः कथं युद्धमभूत्? उच्यते। पक्षप्रतिपक्षसैन्ययोः प्रोत्साहनार्थं भटा युद्धे शार्ङ्गम् कूजयन्ति। तेषां शब्दश्रवणेन प्रतिभटानां सन्निधानमनुमाय तत्तत्स्थानानि लक्षीकृत्य अस्त्राणि मुमुचुः। रजःपटलैरावृतेऽपि रणाङ्गणे भटेषु परस्परं द्रष्टुमशक्तेष्वपि अस्त्रप्रयोगो विफलो नासीदित्यर्थः

अथ 'भल्लापवर्जितैः' रिति पद्यं व्याख्यायते। पारसीकाः प्रायशः श्मश्रुला दृश्यन्ते। न ते मुखं क्षुरन्ति। तथापि श्मश्रूणि अंगुलप्रमाणं वर्धयित्वा अग्रान् निपुणं कृन्तन्ति। तथा च तानि मुखानि वृक्षशाखासु लम्बमानानि माक्षिकपटलानीव दृश्यन्ते। तादृशानि मुखानि रघोर्भटा भल्लैर्निकृत्य रणांकणे

पातयामासुः। क्षौद्रपटलानि भूमौ पतितानि मधुस्रवणैरार्द्राणि भवन्ति। तन्निकटे भूमिः क्लिन्ना च भवति। तथा अत्रापि शिरांसि रक्तस्रवणेनार्द्राण्यासन्। निकटस्थलं क्लिन्नं चाभवत्।

भूयिष्ठाः पारसीकाः हताः। अवशिष्टाः कतिचन रघुं शरणमीयुरिति आनीतशिरस्त्राणा इति पद्येन कथयति। पारसीकाः खलु 'टोपीवाला':ते सन्ति। ते प्रायशः शीर्षकं धरन्ति। ये युद्धे न अम्रियन्त शिरस्त्राणमपनीय रघुं शरणं गताः। शिरस्त्राणापनयनं तेषां विधेयतासूचकम्। यदा विजितः विजेतुः समक्षं गच्छति तदा सः स्वविधेयताप्रकटनार्थं शिरसः शीर्षकमपनयति। एवं ते नग्नशिर्षाः रघोः पादयोः प्रणेमुः। रघोरपि तदेव लक्ष्यमभूत्। शत्रूणां विधेयतापादनमेव तस्य प्रयत्नस्य लक्ष्यम्। तदिदानीं सिद्धमभूत्। पुनः किमर्थं तेभ्योः द्रुह्यति ? ततः किं प्रयोजनम् ? इति मत्वा उदारचित्तः स शान्तः सन्ताननुजग्राह। रघुर्महात्मा खलु। महात्मनां शत्रुभिः सह तावत्पर्यन्तमेव प्रतिकारबुद्धिर्भवति यावत् ते नतशिरस्का अभयं गच्छन्ति। तस्मात् तस्य तैः सह द्वेषभावः प्रणष्टः। ते रघोरनुग्रहपात्राणि चाभवन्।

अथ 'विनयन्ते स्म' इति पद्यम्। रघोः योधाः युद्धात् संजातं क्लेशं अनायासमेवापानयन्। कथम्? उच्यते। पारसीकेषु द्राक्षावाटिका प्रचुरं विद्यन्ते। विशिष्टानां मृगचर्मणां च सौलभ्यं तत्रास्ति। उत्कृष्टमद्यानां जन्मभूमिस्तु पारसीकप्रदेशा इति प्रसिद्धमेव। जेतारस्ते भटाः अतिशीतलेषु द्राक्षानिकुञ्जेषु उत्तमानि मृगचर्माण्यास्तीर्य तेषु निविष्टाः मधुरं मधु पायं पायं ते युद्धक्लममपानयन्।

अथ रघुः पारसीकान् जित्वा उत्तरां दिशं प्रतिष्ठते।

66 ततः प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशम्।
शरैरुस्रैरिवोदीच्यान् उद्धरिष्यन् रसानिव॥

पारसीक विजयानन्तरं ततोऽप्युत्तरां दिशं जेतुं रघुरुदयुङ्क्त। पारसीकप्रदेशेभ्य उत्तरप्रदेशाः हिमवतः पश्चिमोपत्यका इत्यवधार्यम्। सूर्यः उत्तरायणं गतः स्वैः किरणैः जलमुद्धरति। किरणैर्वाष्पीभूतं जलं मेघः संपद्यते इति शास्त्रीयं सत्यम्। सूर्यः उत्तरायणं प्रविष्टः सन् भूमेः सलिलं किरणैः उद्धरति। तथैव रघुः औत्तराहान् देशान् प्रविश्य तत्रत्यान् रिपून् शरैरुन्मूलयामासेति सारः।

कौबेरी = उदीची । भास्वान् सूर्यः । उस्रः = किरणः । उदीच्यान् = औत्तराहान् । रसः = जलं ।

अन्वयः—ततः भास्वानिव रघुः उस्रैः इव शरैः रसान् इव उदीच्यान् उद्धरिष्यन् इव कौबेरीं दिशं प्रतस्थे ।

कुबेरः = वैश्रवणः । कुबेर + अ = कौबेरः । स्त्रीलिंगः-कौबेरी । कुबेरः उत्तरस्या दिशः पतिरिति प्रसिद्धम् । चतसृणां दिशां तथा चतसृणां विदिशां (कोणानां) च एकैके दिक्पालाः सन्तीति पौराणिकः संकल्पः । अस्य चायं क्रमः ।

| दिशः | दिक्पालाः | दिशः | दिक्पाला |
|---|---|---|---|
| पूर्वा | —इन्द्रः | पश्चिमा | —वरुणः |
| दक्षिणपूर्वा | —वह्निः | पश्चिमोत्तरा | —वायुः |
| दक्षिणा | —यमः | उत्तरा | —कुबेरः |
| दक्षिणपश्चिमा | —निरृतिः | पूर्वोत्तरा | —ईशः |

उदीची + य (तद्धितान्तः) । उद् + धृ + इष्य + अत् (शत्रन्तः)

---

रघुः सिन्धुनदीं प्राप । सेनाश्वाः तत्र विश्रमसौख्यमलभन्त ।

67 विनीताध्वश्रमास्तस्य सिन्धुतीरविवेष्टनैः ।
दुधुवुर्वाजिनः स्कंधान् लग्नकुङ्कुमकेसरान् ॥

रघुः पारसीकेभ्यः सिन्धुनदीमुत्तीर्य पूर्वोत्तरदिगभिमुखं काश्मीरान् प्रति यात्रामारभते । सिन्धुनदीतीरे स सेनां निवेशयामास । सैन्येषु तथा तीरे निविष्टेषु तस्य सैनिकाश्वाः मार्गश्रममपनिन्युः । सिकतामयेषु सिन्धुतटेषु शयित्वा ते यथेष्टमङ्गपरिवर्तनं चक्रुः । तदा तेषां निबिडसटेषु स्कन्धेषु कुंकुम-केसरा लग्ना अभवन । तदा तेषां केसराणां कुतकूननं (Tickling) असह-मानाः ते अश्वाः लग्नकुंकुमकेसरान् सटाजटिलान् स्कन्धान् निपुणमकम्पयन् । अध्वा (अध्वन्) = मार्गः । विवेष्टनैः = परिवर्तनैः । दुधुवुः = अकम्पयन्त । धू + उः (लिट्) दुधाव दुधुवतुः दुधुवुः । वाजिनः = अश्वाः । स्कन्धान् = अंसप्रदेशान् अथवा कायान् । लग्नः = सक्तः । केसरः-किञ्जल्कः ।

अन्वयः—तस्य वाजिनः सिन्धुतीरविवेष्टनैः विनीताध्वश्रमाः लग्न-कुंकुमकेसरान् स्कन्धान् दुधुवुः ।

अध्वनः श्रमः =अध्वश्रमः । विनीतः (परिहृतः) अध्वश्रमः यैः ते = अध्वश्रमं विनीतवन्तः । लग्नाः कुङ्कुमकेसराः येषु ते । कुङ्कुमवृक्षाः काश्मीरेषु तत्परिसरप्रदेशेषु च सुलभाः सन्ति ।

---

हूणैः सह रघुरयुध्यत । ते हताश्चासन् ।

68 तत्र हूणावरोधानां भर्तृषु व्यक्तविक्रमम् ।
कपोलपाटलादेशि बभूव रघुचेष्टितम् ॥

रघुः द्वित्राणि दिनानि सिन्धुतीरे निविष्टवान् । ततो यात्राक्लममपनीय स उदीचीं प्रातिष्ठत । तत्रास्ति हूणानां जनपदः । तत्रत्यैः राजभिः सह रघुरयुध्यत । घोरे समरे ते नृपा अम्रियन्त । तेषां अन्तःपुरस्त्रियः तस्मादनाथा अभवन् । विलप्य विलप्य तासां कपोला अरुणा अजायन्त । रघोः विक्रमस्य फलं प्रख्यापयितुं तासां गण्डपाटलिमैवावशिष्टः । अन्यत् सर्वमपि विनष्टमासीदित्यर्थः ।

अन्वयः—तत्र भर्तृषु व्यक्तविक्रमं रघुचेष्टितं हूणावरोधानां कपोलपाटलादेशि बभूव ।

व्यक्तः विक्रमः यस्मिन् तत् । रघोः चेष्टितं । हूणानां अवरोधाः अवरोधाः=अन्तःपुरस्त्रियः । कपोलस्य पाटलं आदिशति इति कपोलपाटलादेशि । (न. न. प्र. ए) कपोलः =गण्डः । पाटलं, पाटलमा अरुणवर्णता । आ+दिश्+ इन =आदेशि =उत्पादकम् । चेष्ट्+इ+त । क्तप्रत्ययोऽत्र भावार्थे प्रयुक्तः; ततोऽस्य चेष्टा चेष्टनं इत्यादि क्रियानामार्थः ।

---

ततः काम्बोजनृपा अपि विधेया अभवन् ।

69 काम्बोजाः समरे सोढुं तस्य वीर्यमनीश्वराः ।
गजालानपरिक्लिष्टैरक्षोटैः सार्धमानताः ॥

हूणविजयानन्तरं स कांबोजं नाम जनपदं जेतुं जगाम । तत्रत्यैः राजभिः सह सोऽयुध्यत । रघोरप्रतिहतं तेजः ते समरे सोढुं न प्रभवन्ति स्म । ते शस्त्रैः क्षतगात्राः सन्तः तस्य विजयिनो रघोः पादे निपेतुः । तेषां राज्ञां दौर्बल्यं रघोर्वीर्यं च कविः तत्संबन्धिनोदाहरणेन स्पष्टयति । तत्र अक्षोटनामका वृक्षविशेषाः सन्ति । ते अत्युन्नताः पृथुलकाण्डाश्च । तेषु सैनिका गजा निबद्धा आसन् । तेषां गजानां शक्तिमसहमानाः ते वृक्षाः गजकटघर्षण

शृंखलासंघट्टनैश्च क्षतप्रकाण्डाः भूमौ अपतन्। तेषां वृक्षाणां पतनसदृशमेव तत्रत्यानां नृपाणां रघोः पादे पतनमिति कविरपहसति ।

अनीश्वराः =अशक्ताः । आलानं =गजबन्धनपाशः वृक्षकाण्डो वा । सार्धम् =सह, साकं, समम् ।

सह+तुं =सोढुं । सोढ सोढव्य, सोढा, सहनं, सह्य एते सह् धातोरुत्पन्नाः । क्लिश+त =क्लिष्ट । गजानां आलानेन परिक्लिष्टैः ।

---

ते रघवे उत्तमाश्वभूयिष्ठानुपहारान् अर्पयामासुः ।

70 तेषां सदश्वभूयिष्ठास्तुङ्गा द्रविणराशयः
उपदा विविशुः शश्वत्; नोत्सेकाः कोसलेश्वरम् ।

कांबोजेषु उत्कृष्टवंशप्रभवाः अश्वाः लभ्यन्ते किल । तैरश्वैः सुवर्णरत्नादिसम्पद्भिश्च ते समृद्धाः । ते राजानः उत्तमाश्वभूयिष्ठान् धनराशीन् तस्मै विजेत्रे उपहारतया समर्पयामासुः । रघवे समर्पितेषूपायनेषु भूयिष्ठोंऽशः अश्वसंचय आसीदित्यर्थः । एवं बहून्युपायनानि रघुमाविशन् । तथापि तं गर्वो नाविशत् । स गर्विष्ठो नाभूदिति भावः । अत्युन्नतानां नृपाणां विजये यादृशो गर्वः कस्यचित् सम्राजः समुत्पद्यते तादृशो गर्वो रघोर्नासीदिति साक्षेपोऽर्थः ।

द्रविणराशयः =सम्पत्संचयाः । उपदाः =उपायनानि, उपहाराः । शश्वत् =पुनः पुनः । उत्सेकाः =गर्वाः ।

अन्वयः—तेषां सदश्वभूयिष्ठाः तुङ्गाः द्रविणराशयः उपदाः कोसलेश्वरं शश्वत् विविशुः । उत्सेकाः न विविशुः ।

सन्तश्च ते अश्वाश्च सदश्वाः । सदश्वाः भूयिष्ठं येषु ते । द्रविणानां राशयः । कोसलानां ईश्वरः । कोसलानां केन्द्रमासीदयोध्येति प्रसिद्धम् ।

---

ततः स हिमालयमारुरोह ।

71 ततो गौरीगुरुं शैलमारुरोहाश्वसाधनः ।
वर्धयन्निव तत्कूटानुद्धूतैर्धातुरेणुभिः ॥

स जयी रघुः काम्बोजान् जिगाय। ततः स हिमवतोऽनर्गलान् जनपदान् जेतुमुत्सेहे। हिमवतः शिखराः गजैः सुखं न समारोढव्याः। तेना गजसैन्यं काम्बोजेष्वेव विहाय अश्वसेनामेव स सार्धम् नीतवान्। तस्य गिरेस्तस्य सानुप्रदेशेषु मनःशिलागैरिकादयो धातवो विद्यन्ते। अश्वानां खुराघातैः तेषां धातूनां रेणुपुञ्जा ऊर्ध्वमुत्पतन्ति स्म। तदा संदर्शकानामेवं सन्देहः समजायत। किंस्विदस्य गिरेः शिखराणि स्वयं पृथुलीभवन्ति? ऊर्ध्वमुद्धूयमानैर्धूलिपटलैः अद्रेः शृंगाणि पूर्वाधिकमुन्नतानि इवाहश्यन्तेत्यर्थः।

गौरीगुरु=पार्वत्याः पिता (हिमालयः)। तत्कूटान्=तस्य शिखरान्।

अन्वयः—ततः सः अश्वसाधनः सन् गौरीगुरुं शैलं उद्धूतैः धातु-रेणुभिः तत्कूटान् वर्धयन् इव आरुरोह।

---

तेन निद्राणेन भवितव्यम्=स निद्राणो भवेत्। निद्राणः=स्वपन्। सन्तर्पकान्=सन्तृप्तिकरान्। तेन केनचित् गणनायकेन भवितव्यम्=स कश्चित् गणनायको भवेत् अत्र भावेप्रयोगः। राहित्यं=अभावः। दुरासदं=दुष्प्रापं। अनन्यविधेयत्वं=स्वस्वामित्वं। दर्पः=गर्वः। अयुक्तः कालः=अकालः। कुतोऽपि=कस्मादपि प्रदेशात्। अवलेपः=गर्वः। चमूः=सैन्यं। निकृत्य=छित्त्वा। स्रुतिः=प्रवाहः। क्लिन्नं=आर्द्रं। ईयुः=प्रापुः। इणाय ईयतुः, ईयुः। लिट् पर। ब्रूमः=कथयामः। पायं पायं=पीत्वा पीत्वा। क्रियायाः पौनःपुन्यं अर्थात् आवृत्तिं सूचयितुं क्त्वाप्रत्ययस्य स्थाने अम् इति प्रत्ययोऽपि प्रयुज्यते। तदा धातोः स्वरविकाराश्च भवन्ति-नी- नायं नायं=नीत्वा नीत्वा। लिख्-लेखं लेखं। सिकता=sand, क्षतगात्राः=छिन्नशरीराः। भूयिष्ठं=अधिकं। किंस्वित्, किमु=किम् प्रश्नार्थका एते शब्दाः। 'अस' धातोः शतृप्रत्ययान्तं रूपमेव 'सत्'। तस्य प्रयोगेषु सूक्ष्मार्थभेदाः अत्रोक्तैः उदाहरणैः परिच्छेद्याः=स्नातो रामो भुक्तवान्। रामः स्नातः सन् भुक्तवान्। नृत्यन्ती सीता श्रान्ता अभवत्=सीता नृत्यन्ती सती श्रान्ताभवत्। सावधाना भवन्त=शृण्वन्तु-भवन्तः सावधानाः सन्तः शृण्वन्तु। अत्रेदं स्पष्टम्। यत्र 'सत्' विशेषणमनुप्रयुज्यते, तत्र 'क्त्वा' प्रत्ययार्थः समापतति। यथा स्नातः सन्=स्नात्वा। नृत्यन्ती-सती=नर्तित्वा। सावधानाः सन्तः=अवधाय [सावधानाः भूत्वा]

॥अभ्यासः॥

प्रयोगान् विपरिणमयत—यथा (भावे)-रावणः बभूव=रावणेन बभूवे। (कर्मणि) पारसीका मधुपानं कुर्वन्ति=पारसीकैः मधुपानं क्रियते।

1) रघुः कौबेरीं दिशं प्रतस्थे। 2 दुधुवुर्वाजिनः स्कन्धान्।
3) रघुचेष्टितं बभूव 4) अश्वसाधनः स गौरीगुरुं शैलं आरुरोह।
5) उत्सेकाः कोसलेश्वरं न विविशुः 6) रघुः कांबोजान् अजयत्।

II ६३, ६७, ६९, इत्येतेषां पद्यानां पदानि विश्लेष्य लिखत।

III अन्तविभक्तिलिंगादिकं लिखत। यथाः—मूर्धनि (उकार-न-प्र, द्वि-बहु.)

1) रेणुभिः 2) तेषां 3) भर्तृषु 4) वाजिनः
5) उद्धरिष्यन् 6) अध्वनः।

IV पाठारम्भे दत्तं पद्यसंक्षेपं अनुवदत।

V अद्य पठितानां पद्यानां सारं संस्कृते संक्षिप्य लिखत।

VI शुद्धीकृत्य लिखत। (यथा-अयोध्ये दशरथो इति किश्चनः राजाः आसीत्=अयोध्यायां दशरथ इति कश्चन राजा आसीत्)

यदा दुष्यन्ते तपोवनं प्रविष्टे तदा स तत्र त्रीन् कन्यकाः अदृश्यत्। ते कन्यकाःतत् तपोवने विद्यमानानी तरून् सिञ्चन् अवर्तत। शकुन्तला अनसूया प्रियंवदा इति तेषां नाम आसन्! दुष्यन्तस्य राजस्य तास्वन्यतमे शकुन्तलायां प्रेम अजनत्। अनसूयया उक्तवती शकुन्तलायाः कथा राजा आकर्णयत्। स तां गान्धर्वेण विधिना परिणयत्। शकुन्तला गर्भं धरत्। पिता कण्वः एतां वार्ता अज्ञायत। स गर्भि शकुन्तलां अनुमोदत। कण्वः स्वसुतां अनुग्रहीत्वा भर्तोः दुष्यन्त राजस्य राजधानीं अप्रेषयत्। शार्ङ्गरवः शारद्वतः गौतमी च तां अनुगच्छन्। यदा ते पुराजधानीं प्राप्तेषु तदा राजः तान् न अभिजानत्। राजा तायाः अर्थनां तिरस्कृतः। मुनिकुमारौ च तां तत्रैव त्यक्तौ।

# अष्टाविंशो दिवसः

द्राक्षावलयभूमिषु विजयोत्सवं निर्वर्त्य पारसीकेभ्यो रघुरुत्तराभिमुखं प्रयियासतीति 'ततः प्रतस्थे' इति पद्येनाह। यथा सूर्यः दक्षिणायनात् उत्तरायणं प्रविशति तथैव रघोरुत्तरायणप्रवेशनमभूदिति कथ्यते। उत्तरायणकाले ग्रीष्मोऽन्तर्भवति खलु। तदा सूर्यस्य तीक्ष्णता वर्धते च। तीक्ष्णकिरणः सूर्यः स्वैः करैः तदा भूमेः जलांशानाकर्षति। सूर्योष्मणा बाष्पीभूतं जलमेव मेघः सम्पद्यते इति प्रसिद्धम् च। तद्वत् रघुः शरैः औत्तराहाणां नृपाणां उन्मूलनार्थम् तां दिशं प्रातिष्ठत।

अथ 'विनीताध्वश्रमाः' इति पद्येन स काश्मीरान् प्रापेति सूचयति। काश्मीरेषु सिन्धुनदी प्रवहतीति प्रसिद्धम्। तस्यास्तीरेषु रघोः सेना निविविशे। अश्वास्तु विश्रमोल्लासेन तस्या नद्याः पुलिनेषु लुलुठुः अर्थात् परिवर्तनं चक्रुः। तस्मात् तेषां मार्गक्लमो विनष्टोऽभवत्। सिन्धुनद्यास्तीरेषु कुङ्कुमवृक्षा बहुलं प्ररोहन्ति। तेषां पुष्पकेसराः तस्मिन् पुलिने विकीर्णा भवन्ति। ते किञ्जल्काः वाजिनां सटानामन्तर्विशन्ति। तदा ते कृतकृतास्वास्थ्यमनुभवन्ति। तत् परिहाराय ते स्कन्धान् अकम्पयन्त। अत्र विकीर्णकेसराणां पुलिनानां, तत्र परिवर्तनसुखमनुभवतां वाजिनां तीरस्थितानां कुङ्कुमवृक्षाणां चालेख्यं तथा कृतकृतनावसरेषु वाजिनां स्कन्धकम्पनस्वभावं च कविरस्माकं पुरस्तादाविष्करोति।

सिन्धुनदीपरिसरेषु सन्ति हूणा नाम जनपदाः। तत्रत्यानां अन्तःपुरतरुणीनां दुर्दशैव 'तत्र हूणावरोधाना'मिति पद्येन वर्ण्यते। रघुः हूणान् जनपदान् आचक्राम। तेन तत्रत्या नृपा अनायासमेव हताः। क्षणेन स जनपदः प्रशान्तो निभृतश्चासीत्। अथ च रघुः हूणान् आक्रामत्; भीषणं युद्धं च संवृत्तं इत्यस्य किं नाम चिह्नम्? अस्ति अस्य व्यक्तं चिह्नम्। हूणानाम् अन्तःपुरतरुण्यः भर्तृनाशेन अनाथा अभवन्। ता इतस्ततः पलायिताः। उच्चैस्तरां विलेपुश्च। स्वकपोलेषु दुःखार्ताः ताः स्वयं कठिनमताडयन्। ऊष्मलं बाष्पं व्यसृजन्। एवं ताडनपीडनक्रन्दनादिभिः तासां कपोलाः अरुणा अभवन्। एवं अरुणाभाः कपोला एव 'रघोर्विजयी विक्रमः तत्र संजातः' इत्यस्य चिह्नमासीत्।

तदनन्तरं काम्बोजान् जेतुं जगामेति 'कांबोजाः समरे सोढु'मिति पद्येन कथयति। कम्बोजाः तमभियोद्धुमशक्ता अभवन्। प्रथमं ते तमभ्ययुध्यन्त। यदा ते रघोः शस्त्राणां रसमीक्ष्दोषदास्वर्त्तितुमारभन्त तदा ते नतशीर्षा रघुं शरणं प्रापुः। तत्र काम्बोजेषु अक्षोटा नामात्युन्नता वृक्षाः सन्ति। तेषु सेनागजा बद्धा आसन्। गजानां कटघर्षणैः दन्ताघातैः शृंखलाकर्षणैश्च तेषां प्रकाण्डाः क्षता आसन्। अन्ते गजानां आघातोत्कर्षणादिकमसहमानाः ते अक्षोटाः भूमौ निपेतुः। अक्षोटवृक्षा इव काम्बोजाश्च शरैः क्षतगात्राः रघोः पादयोः प्रणेमुः। काम्बोजेषु द्वावेवोन्नतौ आस्ताम्। एको मनुजेषून्नतो राजवर्गः। अन्यस्तु वृक्षजातिषु उन्नतः अक्षोटवर्गः। प्रथमस्तु रघोः पादे निपपात। द्वितीयस्तु रघुसेनागजानां पादेषु च, इत्याशयः।

काम्बोजा रघवे उपायनान्युपजह्रुरिति "तेषां सदश्वभूयिष्ठा" इति पद्येन वर्ण्यते। काम्बोजाः स्वं प्रभूतं सुवर्णादि सम्पत्संचयं तस्मै ददुः। तस्मादप्यमूल्याः असंख्येया अश्वाश्च तस्मै उपहृताः। विजिताः काम्बोजाः रघोरभीष्टं साधयन्तः परिचारका इवावर्तन्त। बहुमूल्या उपहाराश्च रघोः लब्धाः। रघुः सर्वत्र विजयी चावर्तत। एवं सत्स्वपि सर्वेषु सौभाग्येषु स गर्वी नाभवत्। एतेनास्य स्वभाववैशिष्ट्यं व्यज्यते।

अथ "ततो गौरीगुरु" मित्यनेन पद्येन हिमालयारोहणमाचष्टे। कांबोजविजयानन्तरं हिमालयान्तर्गतान् जनपदान् विजेतुं रघुरुद्युङ्क्ते स्म। हिमवतः शृङ्गाण्यारोढुं प्रायेण गजाः अशक्ता भवन्ति। तस्मात् स भूयिष्ठं गजसैन्यं तत्रैव विससर्ज। अल्पं गजसैन्यं भूयिष्ठं अश्वसैन्यं चादाय हिमालयमारुरोह। तस्य शृङ्गाणि मनःशिलागैरिकादिभिर्धातुभिः संकलितानि वर्तन्ते। तादृशानां शृङ्गाणां उपरि ते अश्वाः सञ्चरन्ति। तदा तेषां खुराघातेन ते धातवः चूर्णीभूता ऊर्ध्वमुत्पतन्ति। एवमुत्पततां गैरिकाणां रेणुसंघातं दृष्टवा कश्चित् सन्दर्शक आशङ्कते। "किमेतानि हिमवतः शृङ्गाणि जन्तव इव अभिवृद्धिं प्राप्नुवन्ति? उत अग्निज्वालेव क्रमशः ऊर्ध्वम् प्रसरन्ति?" इति।

---

अथ हिमालयवनवासिनां सिंहानां निर्भयप्रकृतेः परिचयं ददाति।

72 शशंस तुल्यसत्त्वानां सैन्यघोषेऽप्यसंभ्रमम्।
गुहाशयानां सिंहानां परिवृत्यावलोकितम्॥

सिंहाः खलु निर्भया मृगाः। अतिभीषणानामप्यन्यशब्दानां श्रवणेन ते न बिभ्यति। ततस्तेषां मनसोऽपि नास्ति चाञ्चल्यम्। असाधारणशब्दानां श्रवणेऽपि ते शयाना एव कण्ठं परिवृत्य निर्भयं विलोकयन्ति। 'के नामास्माकं साम्राज्ये अस्मदाज्ञां विना पदं न्यस्यन्ति?' इति बुद्ध्या ते वीक्षन्ते। 'अहो, इमे क्षुद्राः प्राणिनः। ते यथागतं गच्छन्तु। अस्मद्गर्जनं सोढुमपि ते अशक्ता एव'। इति मत्वा ते यथापूर्वम् शेरते। अयं किल मृगराजानां स्वभावः।

अत्र तु रघोः सेना सारवं साटोपं च हिमालयवनेन गच्छति। तदा मध्येमार्गम् इतस्ततो गुहासु सिंहाः शयाना आसन्। ते रघोः सैन्येन तुल्यबलाः सन्ति. अतस्तेषां न कोपि संभ्रमः समजायत। ते शब्दश्रवणमार्गेण ग्रीवां परिवृत्यावलोकयामासुः। तद् अचञ्चलमवलोकनमेव तेषां संभ्रमराहित्यं प्ररूपापयामास।

अन्वयः—गुहाशयानां तुल्यसत्त्वानां सिंहानां परिवृत्य अवलोकितं सैन्यघोषे अपि असंभ्रमं शशंस।

गुहासु शेरते इति गुहाशयाः। शी-शयनार्थो धातुः। शेते, शयाते, शेरते। तुल्यं सत्त्वं येषां ते। सत्त्वं = बलम्। शशंस = उवाच, स्पष्टीचकार। अवलोकितं = अवलोकनं।

सुखशीतलो वायुः मार्गे तं परिचचार।

73 भूर्जेषु मर्मरीभूताः कीचकध्वनिहेतवः।
गंगाशीकरिणो मार्गे मरुतस्तं सिषेविरे॥

रघुः ससैन्यो हिमालयमारोहति। तदा आरोहणक्लेशेन शरीरं स्विन्नं जायते। तस्मिन्नवसरे तस्य शीतलोपचार आवश्यकः। तत्रत्यो मारुतः तदा तस्य स्वेदापनयनरूपं परिचरणमाचचार।

हिमालयकाननेषु सुलभतया दृश्यमानाः वृक्षविशेषाः खलु भूर्जाः। तेषां पत्रेभ्यः मन्दमरुतः मर्मरशब्दमुत्पादयामासुः। तत्र कीचकानां अथवा वेणूनां पल्लाश्च प्रभूतं प्ररोहन्ति। भ्रमरादिभिरुत्कीर्णैः तेषां सुषिरैः प्रविश्य मारुताः मुरलीनादमुत्पादयन्ति च। अपि च ते गङ्गाजलसंपर्केण शीतस्पर्शाश्च। तादृशाः वाताः तं मार्गे असेवन्त।

मर्मरः = पर्णध्वनिः। शीकरः = जलकणः। = वंशाः = bamboos. मरुतः = (त,पु, प्र, ब,) वाताः। सिषेविरे = असेवन्त। सिषेवे—सिषेवाते—सिषेविरे।

अन्वयः—भूर्जेषु मर्मरीभूताः कीचकध्वनिहेतवः गंगाशीकरिणः मरुतः तं मार्गे सिषेविरे ।

कीचकानां ध्वनिः । कीचकध्वनेः हेतवः । गंगायाः शीकराः । गंगाशीकराः एषां सन्ति इति । शीकर+इन्=शीकरिन् ।

---

कस्तूरीमृगैः वासितेषु शिलातलेषु निविष्टाः सैनिका विश्रममलभन्त ।

74 विशश्रमुर्नमेरूणां छायास्वध्यास्य सैनिकाः ।
दृषदो वासितोत्सङ्गा निषण्णमृगनाभिभिः ॥

भूर्जा इव नमेरुनामकाः वृक्षविशेषाश्च हिमालये विद्यन्ते । ते सुर-पुन्नागा इति च व्यवह्रियन्ते । तेषां विस्तृतासु छायासु शिलातलानि च विद्यन्ते । तेषु शिलातलेषु कस्तूरीमृगाः संघीभूय शेरते । शयानानां तेषां नाभिभ्यः कस्तूरीति प्रथितं सुरभिलं वस्तु बहिः निस्सरति । शयानानां तेषां नाभिसंपर्केण शिलाः सुरभिताः संपद्यन्ते । तादृशीषु शिलासूपविष्टाः रघोः सैनिकाः तेषां नमेरूणां छायासु विश्रमसुखमन्वभवन् ।

वि+श्रम् (लिट्. पर. प्र. ब.) (अधि+आस्+य) ! दृषदः= शिलाः (द. स्त्री. द्वि. ब.) उत्संगः=परिसरः । नि+सद्+त= निषण्ण ।

अन्वयः— नमेरूणां छायासु निषण्णमृगनाभिभिः वासितोत्सङ्गाः दृषद अध्यास्य सैनिकाः विशश्रमुः ।

निषण्णाश्च ते मृगाश्च । मृगाणां नाभयः । वासिताः उत्संगा यासां (दृषदां) ताः । दृषदः अध्यास्य =दृषत्सु आसित्वा । सीता शय्यां अधिशेते = सीता शय्यायां शेते ।

---

रात्रौ स्वयं ज्वलन्तीनां ओषधीनां परिचयं ददाति ।

75 सरलासक्तमातंगग्रैवेयस्फुरितत्विषः ।
आसन्नोषधयो नेतुर्नक्तमस्नेहदीपिकाः ॥

हिमवत्पर्वते ये ये विशिष्टाः असाधारणाश्च पदार्थाः सन्ति तांस्तान् कविर्वर्णनावसरे न परित्यजति । तत्र पर्वतान्तरालेषु खद्योता इव रात्रौ स्वयंप्रकाशाः काश्चन ओषधय अर्थात् लताविशेषाः सन्ति । रघोः सेनागजाः तत्र स्थितेषु सरलद्रुमकाण्डेषु बद्धा आसन् । तेषां गजानां ग्रीवानिबद्धासु शृंखलासु तासां ओषधीनां प्रभापूराः प्रतिफलन्ति स्म । प्रतिबिंबिता सा प्रभा परिसरेषु व्याप्ता चासीत् । तत्र सर्वत्र प्रसृता सा प्रभा रघोः रात्रौ तैलेन विना दीप्यमाना दीपिका आसीत् ।

सरलाः=देवताख्जाताबन्तर्भूताः तन्नामका वृक्षाः। आसक्त=बद्ध। मातङ्गः=गजः ग्रैवेयं=कण्ठश्रृंखला। स्फुरित=प्रतिबिंबित। त्विट्= शोभा। नक्तं=रात्रौ। स्नेहः=तैलं। खद्योतः=Fire Fly. रात्रौ स्वयं प्रकाशमानः कीटविशेषः। नेतुः=नायकस्य। आसन्+ओषधयः।

अन्वयः—सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः ओषधयः नेतुः नक्त मस्नेहदीपिकाः आसन्।

सरलेषु आसक्तानां मातङ्गानां ग्रैवेयेषु स्फुरिताः त्विषः यासां ताः। न विद्यते स्नेहः यस्याः सा। अस्नेहाः च ता दीपिकाः।

आ+सज्+त। आसन्+ओषधयः=आसन्नोषधयः इत्यत्र नकारस्य द्वित्वं विशेषः। ह्रस्वात् परस्य नकारस्य स्वरे परे द्वित्वं भवति। तस्मिन्+इति=तस्मिन्निति। वदन्+अयं=वदन्नयं। दिनरात्र्यपर्यायौ दिवा नक्तं इति द्वे अव्यये स्तः।

---

सैन्यगजानां औन्नत्यं किरातैरनुमीयते।

76 तस्योत्सृष्टनिवासेषु कण्ठरज्जुक्षतत्वचः।
गजवर्ष्म किरातेभ्यः शशंसुर्देवदारवः॥

रघुः सेनां मार्गे तत्र तत्र सन्निवेश्य पुरोगच्छति। सन्निवेशस्थलस्य परिसरे देवदारवः समुन्नता अलक्ष्यन्त। तेषां प्रकाण्डेषु तस्य सेनागजा बद्धा आसन्। तत्र सेनानिवेशे नक्तमुषित्वा प्रातः स ससैन्यः ततः प्रातिष्ठत। प्रस्थितेषु तेषु शून्यं प्रदेशं तं किराताः पर्यटन्तः प्रापुः। सेनाभिरुषितां विलक्षणां तां स्थलीं दृष्ट्वा ते इतस्ततः प्रैक्षन्त। निकटे स्थितानां देवदारूणां प्रकाण्डाग्रेषु तेषां दृष्टयः पेतुः। प्रकाण्डाग्रभागेषु त्वचो निष्पिष्टा दृष्टाः। त्वचां तन्निष्पेषणं तु सेनागजकण्ठरज्जूनां घर्षणैः स्यात् तर्हि कीदृशं स्यात् तेषां गजानामौन्नत्यमिति ते साश्चर्यं ददृशुः।

उत्सृष्ट=त्यक्त। गजवर्ष्म=गजानां गात्रप्रमाणम्। शशंसुः= कथयामासुः, ज्ञापयामासुः।

अन्वयः—तस्य उत्सृष्टनिवासेषु कण्ठरज्जुक्षतत्वचः देवदारवः किरातेभ्यः गजवर्ष्म शशंसुः।

उद्+सृज्+त उत्सृष्टाश्च ते निवासाश्च। कण्ठानां रज्जुभिः क्षताः त्वचः येषां ते। गजानां वर्ष्म। वर्ष्मन् न. न. द्वि. ए शंस् (लिट् प. प्र. ब.)

---

रघुः पर्वतीयैर्गणैस्सहायुध्यत ।

77 तत्र जन्यं रघोर्घोरं पर्वतीयैर्गणैरभूत्
नाराच क्षेपणीयाश्मनिष्पेषोत्पतितानलम् ॥

हिमालयान्तर्गतानां सप्तजनपदानामधीशाः पराक्रमशीला अवर्तन्त । ते सप्त पर्वतीया गणा उत्सवसङ्केता इति नाम्ना व्यवह्रियन्ते स्म । ते प्रथमं न विधेया बभूवुः, न च पलायनं चक्रुः । ते योद्धुकामाः रघुमभ्यगच्छन् । तेषां शस्त्राणि न साधारणानि । नाराचा नाम अग्रे सूच्याकाराः बाणविशेषाः । रिपुं लक्ष्यीकृत्य प्रक्षिप्यमाणाः दण्डविशेषा एव क्षेपणीयाः । अश्मानः =शिलाखण्डाः । तान् क्षिप्त्वापि ते युध्यन्ते । युद्धे तुमुले प्रवृत्ते, द्वयोरपि सैन्ययोरन्तराले तैः मुक्ताः शस्त्रविशेषाः परस्परं संघट्टनं प्रापुः । तदा संजातसंघर्षेभ्यस्तेभ्योऽग्निरुत्पन्नः । इत्थं रणाङ्कणे अग्निमुत्पादयद्भिरायुधैः पक्षप्रतिपक्षभटाः परस्परं अयुध्यन्त ।

जन्यं = युद्धं । निष्पेषः = संघट्टनम्, घर्षणं ।
अन्वयः—तत्र रघोः पर्वतीयैः गणैः नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलं घोरं जन्यमभूत्

नाराचानां क्षेपणीयानां अश्मनां च निष्पेषेण उत्पतितः अनलः यस्मिन् तत् (जन्यं) ।

---

पर्वतीया गणाश्च पराजिता अभूवन् ।

78 शरैरुत्सवसंकेतान् स कृत्वा विरतोत्सवान् ।
जयोदाहरणं बाह्वोर्गापयामास किन्नरान् ॥

उत्सवसंकेतान् तान् पर्वतीयगणान् स रघुः शरवर्षैःजिगाय (जितवान्) । तथा तान् आनन्दरहितान् चकार । ततः स जेता स्वभुजविजयवार्तानिबद्धं गीतं किन्नरैः गापयामास । किन्नराणां गाने प्रावीण्यमस्तीति प्रसिद्धम् । किन्नरः पर्वतीयगणेष्वन्यतमः ।

जयोदाहरणं = जयवार्तानिबद्धं गीतम्, । बाह्वोः = भुजयोः ।
गापयामास =गानं कारयामास ।

वि+रम्+त, विरताः उत्सवाः येषां ते (रम्–विरामः रतिः रमण अभिराम रमणीय) अत्र गापयामास किन्नरैः इति पाठभेदोस्ति। सोऽपि साधुः ।

| केवलम् | प्रयोजकम् |
|---|---|
| किन्नराः जयोदाहृरणं गायन्ति । | रघुः किन्नरैः जयोदाहरणं गापयति । |
| | अथवा, |
| | रघुः किन्नरान् जयोदाहरणं गापयति । |
| किन्नराः जयोदाहृरणं जगुः । | रघुः किन्नरैः जयोदाहरणं गापयामास । |
| | अथवा |
| | रघुः किन्नरान् जयोदाहरणं गापयामास । |

[ प्रयियासति =प्रयातुमिच्छति । निवेशित =camped. पुलिन =Sandy bank. आह =ब्रूते, वदति । ब्रूधातोः वर्तमानकाले आह आहतुः आहुः । आत्थ आहथुः इति मध्यमपुरुष द्विवचनपर्यन्तं विशिष्य रूपाणि सन्ति । आलेख्यं =चित्रं । निभृतः =निःशब्दः । रसं ईषद् ईषद् आस्वदितुं । ईषद् =किञ्चित् । उपायनं =उपहारः । धातुः =mineral. संघातः = समूहः । बिभ्यति =भीता भवन्ति (भी-बिभेति-बिभीतः बिभ्यति) स्विन्नं = स्वेदार्द्रम् । अपनयनं =दूरीकरणं । उत्कीर्णः =विद्धः । प्रथितं =प्रसिद्धं । उपविष्टा =आसीनाः । अलक्ष्यन्त= अदृश्यन्त । आचष्टे =वदति । सोढुं = सह् +तुं उषित्वा =वासं कृत्वा । वस् इत्वा =उषित्वा । प्रस्थितेषु तेषु= यदा ते प्रस्थिताः तदा । वस्+त= उषित । इत्थं= एवं । परिवृत्य =turning back ]

---

॥ अभ्यासः ॥

1 निर्दिष्टरीत्या वाक्यानि विपरिणमयत

क) यथा—बालाः गजानां दर्शनाय अधावन् । बालाः गजान् द्रष्टुं अधावन् । सर्वे आत्मानं पोषयितुं यतन्ते । सर्वे आत्मनः पोषणाय यतन्ते ।

1) वयं पर्वतानां आरोहणे समर्थाः । 2) पुस्तकानि पठितुं छात्राः इच्छन्ति । 3) रमा जलस्य पानाय अगच्छत् । 4) जनाः अन्नं भक्षयितुं गताः । 5) सत्कर्माणि कर्तुम् सज्जना इच्छन्ति । 6) वयं पुष्पाणां आहरणाय यास्यामः । 7) माता पुत्रं पत्रस्य लेखनाय अवदत् । 8) कर्षकाः धान्यमुत्पादयितुं प्रयतन्ते । 9) बालः गवह्निजमीक्षितुं गताः । 10) चन्द्रं द्रष्टुं सर्वे अभिलषन्ति ।

ख) यथा—तस्य बुद्धिरस्ति, तस्मात् सः विजयमलभत । तस्य बुद्धिमत्त्वात् स विजयमलभत । आकाशे नक्षत्राणि सन्ति, तस्मात् तत् सुन्दरं दृश्यते । आकाशस्य नक्षत्रवत्त्वात् तत् सुन्दरं दृश्यते । तटाके जलमस्ति तेन जनाः सुखं स्नान्ति । तटाकस्य जलवत्त्वेन जनाः सुखं स्नान्ति ।

1) गृहे अन्धकारोऽभवत्; तस्मात् बालः आक्रन्दत् ।
2) मनसि भयमस्ति; तस्मात् नाहं तत्र गमिष्यामि ।
3) सूर्यस्य दीप्तिरस्ति; तस्मादाकाशं शोभते ।
4) सरसि कमलानि सन्तिः तेन तत् कमलिनीति कथ्यते ।
5) गजस्य करः अस्ति; तेन स करी भवति ।

ग) यथा—बालेन जलं पीयते । बालेन पीयमानं जलम् ।
सीतया लेखः अलिख्यत = सीतया लिखितः लेखः ।

1) मरुता वृक्षाः चाल्यन्ते 2) रघुणा शैलः आरुह्यते । 3) सूर्येण लोकः प्रकाश्यते । 4) जनैः नद्यः विलोक्यन्ते । 5) वरेण वधूः ईक्ष्यते । 6) छात्रैः पाठाः अपठ्यन्त । 7) विद्वद्भिः उपदेशः अदीयत । 8) मया जलं अपीयत । 9) त्वया छत्रं अध्रियत । 10 मृगैः तृणानि अभक्ष्यन्त ।

II वाक्यानि रचयत—

1) अवलोक्य 2) नक्तं 3) लिखेः 4) पश्यत 5) ईक्षेय । 6) विना 7) साकं 8) ज्ञायते 9) जायते 10) विद्यते ।

III पाठारंभे कृतं पाठसंक्षेपं अनुवदत ।

IV अद्य पठितानां पद्यानां संक्षेपं संस्कृतभाषायां लिखत ।

# एकोनत्रिंशो दिवसः

ह्यः पठितचरं पद्यषट्कं पुनरपि विव्रियते सुखबोधाय । सिंहानां स्वभावविशेषं कविरुदाहरति 'शशंस तुल्यसत्त्वानां' इति पद्येन । हरिणादयो वन्यमृगाः केवलं वृक्षवल्कमर्मरं श्रुत्वाऽपि भीता धावन्ति । ते मृगाः स्वभावतो भीरवो दृश्यन्ते । कुतः ? अन्ये मृगाः तान् आक्रामन्ति । किन्तु सिंहानां न तादृशी भीतिः । न ते अन्यमृगैः पराभवितुं शक्यन्ते; यतस्ते स्वयं मृगराजा वर्तन्ते । ते अन्यान् मृगान् आक्रमन्ति, न त्वन्यैः ते आक्रम्यन्ते । ते धीरं गुहासु शेरते । अयं सिंहानां स्वभावः । यदा रघोः सैन्यघोषं ते अशृण्वन् तदा तेषां न कोऽपि संभ्रमः समजनि । केवलं ग्रीवां परिवृत्य तान् समैक्षन्त । "कोऽयं कोलाहलः अस्माकं सुखभङ्गकः" इति मत्वेवेत्यर्थः । "रे अस्मत्प्रभावमजानानाः दुर्बलाः, युष्मासु मे अनुकम्पा जायते । अधुना गच्छत" इत्याज्ञां दृष्ट्यैव दिशन्तः ते तत्र तथैवाशेरत ।

अथ गंगाजलस्पर्शिनं मन्दमारुतं वर्णयति 'भूर्जेषु मर्मरीभूते' त्यादिना । वायोः आकर्षकाः त्रयो गुणाः सन्ति । शैत्यं मान्द्यं सौरभ्यं च । शीतजल-संपर्केण शैत्यं, मन्दगत्या मान्द्यं, कुसुमसंस्पर्शेन सौरभ्यं च जायते । तेषु द्वौ गुणौ अत्र वर्ण्येते । शैत्यं मान्द्यं च । तत्रत्या वाताः भूर्जपत्रेष्वाघातेन मर्मरशब्दमुत्पादयन्ति । कीचकानां अङ्कुरणानन्तरं आदिमदशायां ते मृदुलाः दृश्यन्ते । तदा भ्रमराः तेषां काण्डेषु सुषिरान् निर्माय तदन्तर्भागे वसन्ति । यदा ते वेणवः क्रमशो दृढा भवन्ति तदा ते सुषिरास्तथैव वर्तन्ते । तैः सुषिरैः यदा वायुः प्रविशति तदा ते मधुरं स्वनन्ति । एवं वातः वेणुषु नाद-मुत्पादयन्ति । गङ्गा हिमवतः पार्श्वे शिलाभिः संघट्टनेन विकीर्णा विशीर्णा च प्रवहति । ततो जलकणाः परितः प्रसरन्ति । तथा प्रसरतां जलकणानां संपर्कः वातेन लभ्यते । एवं मर्मरशब्दमुत्पादयन्तः वेणुनिनदैः प्रोत्साहयन्तः सुखशीतलाः वाताः रघोः सैन्यानां च पर्वतारोहणेन जातान् स्वेदकणान् विलोप्य तमसेवन्त ।

अथ 'विशश्रमुर्नमेरूणा' मिति पद्येन कस्तूरीमृगाणां सान्निध्यमाधिक्यं च हिमालयेऽस्तीति सूचयति । नमेरवो बहुशाखाः निबिडच्छाया वृक्षविशेषाः

हिमालये प्रभूतम् दृश्यन्ते। तेषामधस्तात् विस्तृताः शिलाः सन्ति। कस्तूरीमृगाः मध्याह्नेषु तासु शिलासु शयाना विश्रमम् लभन्ते। मध्याह्नापगमे कठिनातपशमनात् ते ताः शिला मुक्त्वा दूरम् गच्छन्ति। यत्र ते शेरते तदा तेषां नाभिस्पर्शेन ताः शिला मृगमदलिप्ता भवन्ति। ततस्ताः सुरभिलाश्च जायन्ते। तथा सुरभिलासु शिलासु निषण्णाः रघोः सैनिकाः यथेष्टम् विश्रामसुखमलभन्त।

अथ 'सरलासक्ते' ति पद्येन कविः ओषधिविशेषाणां परिचयम् ददाति। हिमालये शिला निष्प्रभाः नक्तं सप्रभाः काश्चन ओषधयः सन्ति किल। नक्तं तासां प्रकाशः प्रसरति। रघोः सैनिकगजाः सरलवृक्षकण्डेषु बद्धा अवर्तन्त। तेषां गजानां ग्रीवासु शृंखलाः विद्यन्ते। तासु शृङ्खलासु तासां ओषधीनां प्रभापूरः प्रतिफलति। तथा प्रतिबिम्बनेन समन्तात् वर्तमानम् सर्वमपि भास्वरम् भवति। एषा प्रतिबिंबिता प्रभा रघोः रात्रिकाले तैलेन विना दीपिता दीपिका संजातेति भावः।

अथ रघोः सैनिकगजानां आकारप्रमाणं 'तस्योत्सृष्टनिवासेषु' इति पद्येन विवृणोति। रात्रौ कस्मिंश्चन सुवासे प्रदेशे स सेनां निवेशयामास। निकटवर्तिनां देवदारुद्रुमाणां स्कन्धेषु सैनिका गजा अबध्यन्त। गजानां कण्ठरज्जुघर्षणेन देवदारूणां प्रकाण्डा अंङ्किता आसन्। प्रभाते ते तन्निवेशप्रदेशं परित्यजन्ति। ततः तत् स्थलं शून्यं भवति। किराताः तेन मार्गेण गच्छन्ति। ते सेनानिवेशस्थले सर्वमपि विषमं विपर्यस्तं च पश्यन्ति। यदृच्छया तरूणां स्कन्धेषु गजग्रैवेयघर्षणैरंकिता भागा लक्ष्यन्ते। तद्दर्शने तु ते विस्मयस्तब्धाः तिष्ठन्ति। "अहो! कियत्प्रमाणा अमी सेनागजाः स्युः। नैतादृशा गजा अस्माभिरेतावत्पर्यन्तमवलोकिताः" इति साश्चर्यम् अवदन्।

अथ "तत्र जन्य" मिति पद्यमवशिष्टं वर्तते। हिमालयान्तर्गताः सप्तजनपदा एवात्र पर्वतीया गणाः। ते एव उत्सवसंकेता इति प्रसिद्धाः। तैः सह तस्य भीमं युद्धमभूत्। कुतस्तस्य भीमता? उच्यते। तेषां आयुधानि विचित्राण्यासन्। नाराचाः क्षेपणीयाः अश्मानश्च तेषामायुधानि। ततो रघोः सैन्यैरपि तान्येवायुधान्युपयुक्तानि। एतैः ते परस्परमयुध्यन्त। तान्यस्त्राणि रणाङ्गणे परस्परसंघट्टनं कृत्वा अग्निमुत्पादयामासुः। तथा युद्धभूमौ अग्न्युत्पादकमभूत्तेषां युद्धमिति भावः।

पर्वतीयैर्गणैः सह नाराचादिभिः भीषणं युद्धमभूदिति कथितम्। ततः "शरैरुत्सवसंकेतानि"त्यनेन पद्येन तेषां पराजयं रघोराज्ञानुवर्तित्वं च कथ्यते। सप्त पर्वतीयगणा उत्सवसंकेता इति कथितं खलु। रघुस्तैः सह युद्ध्वा पराजितान् चकार। तस्मात् तेषां आनन्दमयं जीवितं प्रणष्टमभूत्। रघुः तावतैव न विरराम। तस्य अन्यः कश्चनाभिलाषश्चाजनि। "किन्नर नाम गानालपननिपुणाः। तैः स्वीया विजयवार्ता गापनीयाः" इति मत्वा स्वबाहुवीर्यमधिकृत्य तैः निबद्धानि कीर्तिगानानि स विजेता मधुरमगापयत्।

---

रघुः किन्नराश्च परस्परं एकैकेषां महत्त्वमजानन्।

79 परस्परेण विज्ञातस्तेषूपायनपाणिषु।
राज्ञा हिमवतः सारो राज्ञः सारो हिमाद्रिणा॥

उत्सवसंकेताः किन्नराः विशिष्टरत्नभूयिष्ठानि वस्तूनि रघवे उपजह्रुः। तदा रघुः हिमालयस्य असुलभरत्नरूपं सारं विज्ञातवान्। "अहो ईदृशानि अनर्घाणि रत्नानि अस्मिन् हिमाद्रौ किमु सुलभानि?" इत्यद्भुतपरतन्त्रो रघुरभवत्। किन्नरास्तु इदंप्रथमतयैव अन्यस्मै उपायनान्युपाहरन्ति। तत तेषामप्यजनि विस्मयरूपो विकारः। "अहो ईदृशः कोपि राजा अस्मिन् लोके जीवति किम्?" एवं रघोः प्रभावरूपः सारो हिमाद्रिणापि विज्ञातः। यथा पूर्वम् अपरान्तमहीपालानां पश्चिमसमुद्रस्य च अभेदः कल्पितः तथैव अत्र पर्वतीयगणानां हिमालयस्य चापि अभिन्नता भाविता।

अन्वयः—तेषु उपायनपाणिषु सत्सु राज्ञा हिमवतः सारः, हिमाद्रिण राज्ञः सारश्च परस्परेण विज्ञातः।

उपायनानि पाणिषु येषां ते। उपायन = उपहारः। सारः = शक्तिः। यदा ते उपायनपाणयः अभवन् तदा = तेषु उपायनपाणिषु (सत्सु)।

---

हिमालयजनपदेषु स्वकीर्तिं निक्षिप्य रघुः प्रतिन्यवर्तत।

80 तत्राक्षोभ्यं यशोराशिं निवेश्यावरुरोह सः।
पौलस्त्यतुलितस्याद्रेरादधान इव ह्रियम्।

स रघुः तत्र हिमाद्रौ अन्यैरधृष्यं अचञ्चलं यशःपुञ्जं निवेश्य तस्मात् दक्षिणां दिशं प्रति न्यवर्तत। तस्य यशोराशिः कैलासपर्वतस्यापि लज्जामादधे। सत्कीर्तिः शुभ्रवर्णा दुष्कीर्तिः श्यामवर्णा चेति कविसंकल्पः इति पूर्वमुक्तमेव। कैलासः सन्ततहिमावृतत्वात् शुभ्रवर्णः। रघोः यशोराशिः कैलासपर्वतादप्यधिकतरां पुञ्जतां वावहत्। ततः कैलासः सलज्जो बभूव। "अहं सर्वशुभ्रः सर्वोन्नतश्चासम्। अधुना तु मत्तोऽप्युन्नततरः शुभ्रतरश्च यशोराशिर्दृश्यते। उन्नतोऽहमधुना नम्रः संजातः। शुभ्रोऽहमधुना विवर्णः संभूतः।" इति चिन्तया स पर्वतः ह्रीणः अर्थात् लज्जितोऽभूत्। एवं रघुः कैलासस्य लज्जामापादयन् प्रतिन्यवर्तत।

अक्षोभ्यं = क्षोभयितुमशक्यं, अधृष्यं। ह्रियं = लज्जां। पौलस्त्यः = रावणः। पुरा रावणः कैलासं बाहुनोत्पाटयन् तुलयति स्मेति कथा पुराणेषु विद्यते। तत् कथासंबंधेनैवात्र पौलस्त्यतुलितस्याद्रेरित्यस्य कैलासस्येत्यर्थः सिध्यति।

अन्वयः—तत्र सः पौलस्त्यतुलितस्य अद्रेः ह्रियं आदधानः इव अक्षोभ्यं यशोराशिं निवेश्य अवरुरोह।

यशसां राशिः। पौलस्त्येन तुलितः। क्षुभ्+य = क्षोभ्य। नि+विश्+य। अव+रुह्+अ(लिट्)। पुलस्त्य+अ (तद्धितान्तः)। आदधानः आ+धा+आन (शानच्)। ह्रीशब्दस्य स्त्रीशब्दवद् रूपाणि। मत्तः = From me. (मत्+तः)

---

स लौहित्यानदीं उत्तीर्य प्राग्ज्योतिषान् प्राप।

81 चकम्पे तीर्णलौहित्ये तस्मिन् प्राग्ज्योतिषेश्वरः।
तद्गजालानतां प्राप्तैः सह कालागुरुद्रुमैः॥

स रघुः लौहित्यां नाम नदीं उदतरत्। ततः स प्राग्ज्योतिषान् नाम जनपदान् प्राप। प्राग्ज्योतिषाणां राजा रघोः आगमनवृत्तान्ताकर्णनादेव भयादकम्पत। प्राग्ज्योतिषेषु कालागुरवो नाम वृक्षाः सुलभा विद्यन्ते। तेषां काण्डेषु रघोः गजा अबध्यन्त। एवं ते वृक्षाः आलाना अर्थात् गजबन्धनवृक्षकाण्डाः संजाताः। गजानां प्रोथघातात् मस्तकघर्षणेन ते द्रुमाः चकम्पिरे। प्राग्ज्योतिषाणामीश्वरः तत्रत्या अगुरुवृक्षाश्च सममेव अकम्पन्तेत्यर्थः।

अन्वयः—तस्मिन् तीर्णलौहित्ये सति प्राग्ज्योतिषेश्वरः तद्गजालानतां प्राप्तैः कालागुरुद्रुमैः सह चकम्पे ।

तीर्णा लौहित्या येन सः । प्राग्ज्योतिषाणां ईश्वरः । तस्य गजानां आलानानि । आलानतां प्राप्तैः=आलानीभूतैः ।

पुत्रः दरिद्रतां प्राप्तः [गतः] पुत्रः दरिद्रीभूतः । पुत्रः दरिद्रः अभवत् ।
तातः क्रुद्धतां प्राप्तः [गतः] तातः क्रुद्धीभूतः । तातः क्रुद्धः अभवत्
कम्प् [लिट्. आ. प्र. ए ] तृ+त =तीर्ण । प्र+अप्+त =प्राप्त

---

प्राग्ज्योतिषेश्वरः तस्य सेनापरागदर्शनेनापि भीतोऽभवत् ।

82 न प्रसेहे स रुद्धार्कमधारावर्षदुर्दिनम् ।
रथवर्त्मरजोऽप्यस्य कुत एव पताकिनीम् ॥

रघोः रथमार्गात् रजांसि उत्पतन्ति स्म । रजः प्रसरणात् आकाशं आच्छन्नमभूत् । ततः सूर्यप्रकाशाभावात् मेघावरणाभावेऽपि तद्दिनं वर्षधाराभिर्विनाऽन्धकारितं दुर्दिनमभवत् । तादृशानां रजसामाक्रमणमपि प्राग्ज्योतिषेश्वरः सोढुं शक्तो नाभवत् । एवं तर्हि कथं सः तस्य सेनां अभियोद्धुं पारयति?

दुर्दिनं=मेघच्छन्नं दिनम् । पताकिनी=सेना । वर्त्मन्=मार्गः । कुतः एव=पुनः कथम् ।

अन्वयः—सः रुद्धार्कं अधारावर्षदुर्दिनं अस्य रथवर्त्मरजः अपि न प्रसेहे । कुत एव पताकिनीं प्रसेहे ।

रुद्धः अर्कः यस्मिन् तत् । न विद्यते धारावर्षः यस्मिन् तत् । अधारावर्षम् च तत् दुर्दिनं च । रथानां वर्त्म । रथवर्त्मनः रजः ।

प्र+सह्+ए (लिट्. आ. प्र. ए.) रजः (स. नपु. द्वि. ए.) ।

---

रघुः कामरूपेश्वरं जिगाय ।

83 तमीशः कामरूपाणां अत्याखण्डलविक्रमम् ।
भेजे भिन्नकटैर्नागैरन्यानुपरुरोध यैः ॥

प्राग्ज्योतिषाणां विजयानन्तरं स विजेता कामरूपान् नाम जनपदान् अभि प्रतस्थे । तत्र कामरूपाधिपः तस्य रघोर्विधेयोऽभवत् । स गजानाश्रित्य रघुमाश्रितवान् । गजानां गण्डतलेभ्यो मदजलं प्रस्रवदवर्तत । तैरेव

गजैः स कामरूपेशः पूर्वमन्यान् शत्रून् जिगाय । तादृशगजरूपमुपहारं दत्त्वा स स्वयं विधेयोऽभूदित्यर्थः ।

तं+ईशः । आखण्डलः =इन्द्रः । कटः =कपोलः । नागः =गजः अन्वयः—यैः अन्यान् उपरुरोध तैः भिन्नकटैः नागैः कामरूपाणां ईशः अत्याखण्डलविक्रमं तं भेजे ।

आखण्डलस्य विक्रमः । अतिक्रान्तः आखण्डलविक्रमः येन सः । भिन्नाः कटाः येषां ते । कटान् भित्त्वैव मदजलं प्रस्रवति । भज् (लिट् अ प्र. ए. ) उप+रुध्+अ (लिट्. प. प्र. ए.) ।

[समजनि =समजायत, सञ्जातः । सकृद् =एकवारं । मत्वा =विचिन्त्य अजानानाः =अजानन्तः, अबोधन्तः । दृष्टया+एव । विशन्तः = यच्छन्तः । अशेरत = शयिताः । अधस्तात् =अधः । निषण्णाः =आसीनाः । समन्तात् = परिसरे । विपर्यतं = व्यत्यस्त, असाधारणं । कियत्प्रमाणाः = कियदौन्नत्यवन्तः । अश्मानः = शिलाः । अभिलाषः च अजनि = अजायत । अनर्घं = अमूल्यं । इदंप्रथमतया एव = प्रथमत एव । सन्ततं हिमेन आवृतः अस्ति, अतः = सन्ततहिमावृतत्वात् । मत्तः = मत् (अस्मत् पं. ए.) उत्पाटयन् = समूलमुद्धरन् । उद्रेकः = आधिक्यं । आच्छन्नं = आवृतं ।

---

॥ अभ्यासः ॥

1 निर्दिष्टरीत्या वाक्यानि विपरिणमयत ।

(क) यथा—मेघेषु वर्षत्सु भूमिः क्लिन्ना भवति ।
यदा मेघाः वर्षन्ति तदा भूमिः क्लिन्ना भवति ।
यदा दिलीपः वनं अगच्छत् तदा रघुः राज्यं अरक्षत् ।
दिलीपे वनं गते रघुः राज्यं अरक्षत् ।

1) अश्वेषु शैलमारोहत्सु शृंगाणि अवर्धन्त इव । 2) यदा सैन्यघोषः श्रुतः अभवत् तदा सिंहानां संभ्रमो नाभवत् । 3) निवासेषु सैन्यैः उत्सृष्टेषु किराताः प्रापुः । 4) केरलयोषित्सु धावन्तीषु रघुः ताः अलञ्चकार । 5) तस्मिन् तीर्णलौहित्ये प्राग्ज्योतिषेश्वरः चकम्पे ।

ख) यथा—वनिताभिः भूषणानि उदसृज्यन्त । वनिताभिः उत्सृष्टानि भूषणानि । पाण्ड्यैः प्रतापः न विसोढः । पाण्ड्यैः प्रतापः न विषेहे ।

1) तैः मुक्तासारः अधीयत । 2) योधैः पीतः नालिकेरासवः 3) आत्मा मुह्यैः संरक्षितः । 4) तेन जयस्तंभाः निखाताः । 5) तेन नद्यः सुप्रतरा अक्रियन्त । 6) अस्माभिः पत्राणि लिख्येरन् । 7) द्विजैः पाठ्याः वेदाः । 8) त्वया आम्राणि खाद्यन्ताम् ।

म) यथा—द्रुमाः आलानतां गताः =द्रुमाः आलानानि अभवन् ।
रघोः कीर्तिः अनश्वरः अभवत् = रघोः कीर्तिः अनश्वरतां गता ।

1) सूर्यस्य किरणाः तीक्ष्णतां गताः (प्राप्ताः) । 2) भवान् परीक्षाया प्रथमः अभवत् । 3) जानकी साहित्ये समर्थतां गता । 4) अलसः सर्वदा पराजितत्वं प्राप्नोति । 5) रघोः गजाः मत्ततां अगच्छन् ।

II पाठारम्भे दत्तं पद्यानां संक्षेप अनुवदत ।

III पदानि विश्लेष्य लिखत । यथा—यद्यप्यसावत्रागतस्तथा प्यमुमहं नापश्यम् । यदि, अपि, असौ, अत्र, आगतः तथा, अपि, अमुं, अहं अपश्यम् । रथगजतुरगैर्विजितशत्रुगणस्सदिलीपसूनुर्हिमालयमारुरोह । रथगजतुरगैः, विजितशत्रुगणः, सः, दिलीपसूनुः, हिमालयं, आरुरोह ।

पुरा चन्द्रवंशे दुष्यन्तो नाम कश्चिद्राजाजायत । स आत्मजानिव प्रजा अरक्षत् । मृगयालोलुपोऽसावेकस्मिन्दिनेऽरण्यमगच्छत् । स तस्मिन्वने वसतोऽनेकान् सत्त्वान्हन्ति स्म । कश्चिद्धरिणो रविमिवोज्ज्वलन्तन्तमवलोक्य भयेनाधावत् । दुष्यन्तस्त्वेनं मृगमेवानुगच्छन्नरण्यस्यान्तरविशत । एवं धावतोस्तयोर्मध्ये कश्चनर्षिकुमार आगच्छत् । स मृगमनुधावन्तन्तन्नृप-मेवमवदत् । "भो राजन्नेष मृगः कण्वेनर्षिणात्मज इव रक्ष्यते । 'भवतैष न हन्तव्यः' । राजाऽब्रवीत् । मुनिकुमार, तवाज्ञां शिरसा वहता मया बाणः प्रतिसंहृतः । तच्छ्रुत्वा मुनिकुमारस्तं सम्राजं पुत्रं 'लभस्वे' त्यन्वगृह्णाच्च ।

IV अद्य पठितानां पद्यानां सक्षेपं संस्कृतभाषायां लिखत ।

---

॥ अवधेया विषयाः ॥

सन्धिर्द्विधा—नित्यसन्धिः अनित्यसन्धिरिति । नित्यसन्धिरवश्यंभावी । अनित्यसन्धिस्तु वक्तुरिच्छामनुसृत्य विकल्पेन भवति । अत्रेदं प्रमाणम्—

संहितैकपदे नित्या, नित्या धातूपसर्गयोः
नित्या समासे, वाक्ये तु सा विवक्षामपेक्षते ।

अनेन पद्येन नित्यसन्धेरनित्यसन्धेश्चावकाशा विविच्यन्ते अर्थात् विभज्यन्ते । संहिता =परमसामीप्यम्, सन्धानम्, सन्धिकार्यम् । संहिता एकपदे नित्या भवति । अत: 'बाले', 'अभवत्' इत्यादीनां स्थाने 'बाल इ', 'अ भू अत्' इत्येवम् विभज्य न वक्तव्यम् । तथा धातूनामुपसर्गाणां च सन्धिरपि नित्य: । अत: 'सीता राममन्वगच्छत्' इत्यस्य स्थाने 'सीता रामं अनु अगच्छत्' इति न प्रयोक्तव्यम् । समासेऽपि तथा । 'मनोगत' मित्यस्य स्थाने 'मनस् गतम्' इति च न वक्तव्यम् । एते नित्यसन्धेरवकाशा: । अनित्यस्य सन्धेरवकाशस्तु वाक्ये भवति । तत्र वक्तुर्विवक्षामनुसृत्य पदानि सन्धाय, न सन्धाय च प्रयोक्तव्यानि । 'रामस्सीताम्पर्यणयल्लक्ष्मणऊर्मिलाञ्च' 'राम: सीतां पर्यणयत् लक्ष्मण: ऊर्मिलां च' इति सन्धाय विभज्य च प्रयोगो दृश्यते । उभयमपि सम्मतमेव ।

साध्यदशा सिद्धदशा च ।

अस्माकमुपयोगयोग्यानां सर्वेषामपि वस्तूनां द्वे दशे स्त:; सिद्धदशा साध्यदशा चेति । सिद्धदशां प्राप्तान्येव वस्तून्यस्माभिरुपयुज्यन्ते । पुस्तकम् सिद्धदशायां वर्तते । पत्रसूत्रादिकम् तस्य साध्यदशायां वर्तमानानि वस्तूनि, डाल-घृतसितादिकम् लड्डू नामकस्य मोदकस्य साध्यदशा । तेषां सिद्धदशैव लड्डू । शिलाकाष्ठादिकम् गृहस्य साध्यदशा । तेषां सिद्धदशैव गृहम् तथैव बालेषु इत्येतत् बाल सु इत्यनयो: सिद्धम् पदम् । सिद्धमेवपदमस्माभि: प्रयुज्यते । नतु बाल सु इति । निष्प्रयोजनता इति सिद्धदशायां स्थितस्य पदस्य साध्यदशा निस् प्र युज् अन ता स् इत्येवं भवति ।

पदच्छेद: ।

पदच्छेद: अथवा पदविश्लेष इत्यनेन सिद्धदशायां वर्तमानानां पदानां विश्लेषणमेव विवक्षितम्; नतु साध्यदशायाम् वर्तमानानाम् । अत: "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतम् समा:" इत्यस्य "कुर्वन् एव इह कर्माणि जिजीविषेत् शतम् समा:" इत्येव पदच्छेद: । नतु कृ, अत्, स्, एव, इदम्, इ, कर्मन्, इ, जीव्, स, ईत्, शत, अम्, समा, अ:" इति ।

---

# त्रिंशो दिवसः

अतीते दिने पठितपूर्वाणां पद्यानां सारः संक्षिप्यते। पर्वतीयेभ्यः स उपायनानि स्वीचकारेति "परस्परेण विज्ञात" इति पद्येन उच्यते। ते पर्वतीयाः स्वपाणिषु उपायनान्यादाय रघुमुपागताः। यदा ते तान् उपहारान् रघवे समर्पितवन्तः तदा स विजेता हिमालयस्य सारं विदितवान्। "कीदृशान्यमूल्यानि रत्नान्यस्य पर्वतस्यान्तर्निक्षिप्तानि स्युः! मया तु ईदृशानि रत्नानि नैव दृष्टपूर्वाणि" इति विचिन्तयन् स साद्भुतस्तत्र तस्थौ। ते जानपदाश्च साश्चर्या बभूवुः। कुतस्तेषामाश्चर्यम्? अस्ति तेषामाश्चर्ये हेतुः। तावत्पर्यन्तं नैतादृशः पराजयस्तेषां संभूतः। 'अहो!, अस्य वीर्यमज्ञातचरमेव' इति तस्य वीर्यस्य तत्त्वतो ज्ञानं तेषां चाभवत्।

अथ 'तवाक्षोभ्यं यशोराशि'मिति पद्येन तस्य हिमालयात् निवर्तनारंभः कथ्यते। हिमालयान्तर्गतेभ्यो जानपदेभ्यः स उपायनानि स्वीकृतवान्। तर्हि स तेभ्यः किं नाम प्रत्यर्पितवान्? उच्यते। स परैरधृष्यं यशोराशिं तत्र निचिक्षेप। पुञ्जीभूता सा कीर्तिः कैलासपर्वतादपि धवलतरा उन्नततरा चासीत्। कैलासो रजतगिरिरिति प्रसिद्धं खलु। सततं हिमावृतत्वात् तस्य सदा धावल्यम् रजतप्रभत्वं च स्वाभाविकमेव। कैलासः परमशिवस्यावासपर्वत इति च प्रसिद्धम्। पुरा खलु रावणः कैलासमुत्पाट्य शिवं तोषयामासेति च पौराणिकी कथा विद्यते। तदा सकृत् तस्य गिरेः सौभाग्यमदो नष्ट आसीत्। अधुना तु द्वितीयो मानभङ्गः, यतस्तस्मादपि पृथुन्नो धवलश्च रघोः कीर्तिराशिः तत्र पुञ्जीभूतोऽदृश्यत। तदा देवादिभिरभिष्टुतः समाश्रितश्च स पर्वतो नितरां लज्जितोऽभूत्। 'देवाः किमतः परं मामवगणय्य रघुयशोराशिमाश्रयेरन्? तर्हि मम का गतिः स्यात्? अहं तेषां समक्षमल्पसौभाग्यः स्याम्। किमर्थमेवं जीवेयम्।' इति खिन्नस्य तस्य गिरेः मनःक्षतिमादधानः स रघुः हिमालयादवारोहत्।

अथ तस्य प्राग्ज्योतिषाभिमुखं प्रस्थानं कविः वर्णयति "चकम्पे तीर्णलौहित्ये" इत्यादिना पद्येन। उत्सवसंकेतान् प्राग्ज्योतिषान् चान्तरा लौहित्या नाम नदी प्रवहति। यदा स हिमालयादवतीर्य लौहित्यामुदतरत् तदैव

प्राग्ज्योतिषेश्वरः कम्पितुमारभत। कम्पनप्रकारं कविरुदाहरति। तत्र कालागुरुद्रुमाः समुन्नताः प्रचुरं विद्यन्ते। तेषां काण्डेषु रघोः सेनागजाः बद्धा आसन्। मदलहरीमसहमानाः ते गजाः दन्तैः करैः मस्तकैश्च तान् अगुरून् गुरुतरं निजघ्नुः। तेन ते सदैव कम्पमाना आसन्। एवं प्राग्ज्योतिषेशं कम्पनविषये बहवोऽगुरुद्रुमाः अन्ववर्तन्त। रघौ प्राग्ज्योतिषान् प्रविष्टे सति स्थावरा जङ्गमाश्च सममेव चकम्पिरे इति भावार्थः।

प्राग्ज्योतिषेश्वरः तेन सह योद्धुं न शक्तोऽभूत् इति 'न प्रसहे स राद्धकं' इत्यादिपद्येन कथयति। यदा रघुस्तं जनपदं प्राविशत् तदा रथमार्गादुत्पन्नैः परागपटलैः अन्तरिक्षं व्याप्तमभूत्। तैः सूर्यकिरणप्रसरः अव्रियत। ततः तद् दिनं मेघच्छन्नं अथवा दुर्दिनमिवासीत्। तं परागपटलमपि सोढुं प्राग्ज्योतिषेश्वरो न प्राभवत्। एवं स्थिते तस्य सेनामभिमुखीकर्तुं प्राग्ज्योतिषेश्वरः कथं प्रभवति? सेनारेणुपुञ्जं दृष्ट्वैव स राजा रघोर्विधेयोऽभवदिति भावः।

ततः कामरूपविजययात्रा 'तमीशः कामरूपाणा' मित्यनेन पद्येन वर्ण्यते। रघुरिन्द्रादपि विक्रान्तो वीरश्चासीत्। तादृशे तस्मिन् कामरूपान् प्रविशति सति कामरूपाधिपः नतशीर्षः सन् रघुमुपजगाम। तस्य प्रीतये मत्तगजरूपाण्युपायनानि च समर्पयामासुः। मदजलं स्रवद्भिस्तैरेव गजैः कामरूपेश्वरः ततः पूर्वम् अन्यान् शत्रून् जिगाय। स्वराज्यसंरक्षकान् तान् गजान् सः स्वस्वामिने उपाहरत्। रघोः रक्षकत्वे स्वीकृते, किमर्थं तेषां गजानां पालन पोषणादि क्रियते इति मत्वेवेत्यर्थः।

विजितः विजेतारमर्चयति।

84 कामरूपाधिपस्तस्य हेमपीठाधिदेवताम्।
रत्नपुष्पोपहारेण छायामानर्च पादयोः

रघुः कामरूपाणामीश्वरं जित्वा तस्य कनकसिंहासनमधिरूढवान्। तदा कामरूपेशः तस्य रघोः पादतले रत्नान्युपाजहार। रघोः पादलक्ष्मीं रत्नरूपैः पुष्पैः स पूजितवानिति भंग्यन्तरेण कथितम्।

हेम = स्वर्णं। हेमन् नकारान्तः। छाया = लक्ष्मीः। आनर्च = पूजयामास। रत्नान्येव पुष्पाणि, तेषां उपहारेण।

अन्वयः—कामरूपाधिपः हेमपीठाधिदेवतां तस्य पादयोः छायां रत्नपुष्पोपहारेण आनर्च।

अर्च् +अ (लिट्. प. प्र. ए.) मध्ये नकारागमो विशेषः । आनर्च आनर्चतुः, आनर्चुः ।

---

जैत्रयात्रामुपसंहरति ।

85 इति जित्वा दिशो जिष्णुर्न्यवर्तत रथोद्धतम् ।
रजो विश्रामयन् राज्ञां छत्रशून्येषु मौलिषु ॥

उक्तप्रकारेण स जयशीलो रघुः निर्दिष्टपूर्वान् सर्वानपि प्रदेशान् विजिग्ये । ततः विजितानां नृपाणां छत्रशून्येषु नग्नेषु शिरस्सु रथसमुद्धूतानि रजांसि विन्यस्य स्वां पुरीं न्यवर्तत ।

जिष्णुः = जयशीलः (जि+स्नु) । इष्णु, स्नु, इति प्रत्ययौ कर्त्रर्थे प्रयुज्येते इति पूर्वमुक्तम् । रथैः उद्धतं । मौलिषु = किरीटेषु ।

अन्वयः—जिष्णुः सः इति दिशो जित्वा रथोद्धतं रजः छत्रशून्येषु राज्ञां मौलिषु विश्रामयन् न्यवर्तत ।

नि+वृत् (लङ्. आ. प्र. ए) उद्+हन्+त = उद्धत ।

---

रघुः विश्वजिन्नामकं यज्ञं आहृतवान् ।

86 स विश्वजितमाजह्रे यज्ञं सर्वस्वदक्षिणम् ।
आदानं हि विसर्गाय सतां वारिमुचामिव ॥

स्वपुरीनिवर्तनानन्तरं स रघुः विश्वजिन्नामकं यज्ञं कर्तुमारभत । राज्ञा तावत्पर्यन्तं यत् स्वायत्तीकृतं तत् सर्वं तस्मिन् यागे दक्षिणात्वेन दीयते । ततः स अकिञ्चनो अथवा निर्धनो भवति । उचितेषु पात्रेषु समर्पणार्थमेव स अन्येभ्यः धनं आदत्त । यथा मेघः अन्यत्र वर्षणार्थमेव समुद्रात् जलमादत्ते तथैव रघुरपि शत्रुसमूहात् सम्पदमादाय उत्तमपात्रेष्ववर्षदिति भावः ।
अन्वयः—सः सर्वस्वदक्षिणं विश्वजितं यज्ञमाजह्रे । वारिमुचामिव सतां आदानं विसर्गाय भवति हि ।

आ+हृ+ए (लिट् आ. प्र. ए.) = समाहृतवान् । सर्वस्वं दक्षिणा यस्मिन् सः । वारि मुञ्चति । वारिमुचां = मेघानां । वारि+मुच् । चकारः ककारो भवति । यथा वाक् वाचौ वाचः इत्यत्र चकारः ककारो जायते तथा । वारिमुक् वारिमुचौ वारिमुचः । विसर्गः = त्यागः । सतां = सज्जनानां

---

रघुः यागावसाने सामन्तनृपान् निवर्तयामास ।

87 सत्रान्ते सचिवसखः पुरस्क्रियाभिः
गुर्वीभिः शमितपराजयव्यलीकान् ।
काकुत्स्थश्चिरविरहोत्सुकावरोधान्
राजन्यान् स्वपुरनिवृत्तयेऽनुमेने ॥

यागोऽवसितः । जैत्रयात्रायां ये राजानो रघुणा विजिताः ते सर्वेऽपि यागमहामहे सन्निहिता आसन् । यज्ञेऽवसिते तान् सामन्तनृपान् स्वं स्व जनपदं निवर्तयितुं रघुरुद्युङ्क्ते स्म । निवर्तनात् पूर्वमेव रघुः मन्त्रिभिः समन्वितः तेभ्यः उचितान् पुरस्कारान् ददौ । पराजयेन यद् दुःखं तेषां समुत्पन्नं तत् रघुणा दत्तैः पुरस्कारैः आपाक्रियत । यज्ञारंभात् पूर्वमेव सन्निहिता राजानः यावदवभृथस्नानं तत्रैवावसन् । तावत्कालं ते अन्तःपुरजनैः विरहिता अवर्तन्त । तास्तु तरुण्यः स्वप्राणनाथान् प्रतीक्षमाणाः उत्कण्ठाकुलाः स्वराजधानीष्वेव यथाकथञ्चित् कालं यापयन्त्यः स्युः । एते सामन्तनृपाश्च तासां समागमायोत्सुकाश्च भवेयुः । एवं चिराय विरहदुःखमनुभवतो नृपान् 'गच्छत, सुखा भवतां पन्थानः सन्तु, एवं पुनर्दर्शनाय' इत्यादिभिरनुकूलैर्मृदुलैर्वचनैरालप्य स निवर्तनायानुमतिं दत्तवान् ।

अन्वयः—काकुत्स्थः सत्रान्ते सचिवसखः सन् गुर्वीभिः पुरस्क्रियाभिः शमितपराजयव्यलीकान् चिरविरहोत्सुकावरोधान् राजन्यान् स्वपुरनिवृत्तये अनुमेने ।

पुरस्क्रिया =पुरस्कारः । व्यलीकं =दुःखं । अवरोधः =अन्तःपुरांगनाः । राजन्याः =राजपुत्राः, क्षत्रियाः ।

काकुत्स्थः =उन्नतराजवंशजः (रघुः) । ककुदि तिष्ठति इति काकुत्स्थः । ककुदि (सर्वेषामप्युन्नतकोट्यां) तिष्ठति इत्यर्थः । सत्रं =यज्ञः । सचिवानां सखा अथवा सचिवा एव सखायः यस्य सः =सचिवसखः । राजन्, सखि अहन्, उक्षन्, इत्यादयः कतिचन शब्दाः समासेषूत्तरपदस्थाः राज, सख, अह, उक्ष इत्येवं अकारान्ताः संपद्यन्ते । महान् च असौ राजा च = महाराजः, प्रियसखः, त्र्यहः, महोक्षाः ।

शमितं पराजयव्यलीकं येषां ते चिरविरहेण उत्सुकाः अवरोधाः येषां ते ।

---

राजानः प्रस्थानावसरे रघुं प्रणेमुः ।

88 ते रेखाध्वजकुलिशातपत्रचिह्नं
सम्राजश्चरणयुगं प्रसादलभ्यम् ।
प्रस्थानप्रणतिभिरंगुलीषु चक्रुः
मौलिस्रक्च्युतमकरन्दरेणुगौरम् ।

यज्ञे संमिलिताः नृपाः निर्वर्तितुमारभन्ते । सार्वभौमो रघुः चरणौ भूमौ न्यस्य कनकसिंहासने तिष्ठति । जिगमिषवो नृपाः एकैकशः तस्य पादयोः प्रणमन्ति । तदा तैः धृतानां शिरोमाल्यानां पुष्पमकरन्दपरागपतनेन रघोः चरणांगुलयो गौरवर्णाः संपद्यन्ते । तच्चरणपतनसौभाग्यं तु न साधारणैर्लभ्यते । [illegible]भाग्यैर्भाग्यवद्भिरेव तल्लभ्यते । रघोश्चरणौ तु विशिष्टलक्षणयुक्तौ चास्ताम् । ध्वजकुलिशातपत्ररूपा रेखाः तयोः पादयोरदृश्यन्त ।

अन्वयः—ते रेखाध्वजकुलिशातपत्रचिह्नं प्रसादलभ्यं सम्राजः चरणयुगं प्रस्थानप्रणतिभिः अंगुलीषु मौलिस्रक्च्युतमकरन्दरेणुगौरं चक्रुः ।

कुलिशं = वज्रम् । स्रक् = माला । च्युत = स्रस्त, पतित । ध्वजः च कुलिशं च आतपत्रं च ध्वजकुलिशातपत्राणि । रेखाः एव ध्वजकुलिशातप-त्राणि = रेखाध्वजकुलिशातपत्राणि । तेषां चिह्नानि यस्मिन् तत् (चरणं) । चरणयोः युगं । प्रसादेन लभ्यं । प्रस्थानस्य समये कृताः प्रणतयः । (मध्यमपदलोपो) मौलीनां स्रग्भ्यः च्युतैः मकरन्दैः रेणुभिः च गौरं ।

अथेदमन्तिमपद्यस्थक्रमप्यत्रैव संक्षिप्यते । जैत्रयात्रान्ते रघुः स्वपुरीं आयाति । विश्वजिन्नामकयागस्यानन्तरं सामन्तनृपाः स्वां स्वां पुरीं निर्वर्तितु-कामा अभवन् । ते निववृतिरे च, इत्ययमत्र संक्षेपः । तत्र 'कामरूपेश्वरस्तस्य' इति पद्ये कामरूपेशेन रघुरपूज्यतेति कथ्यते । रघुः कामरूपाधिपं जित्वा तस्य स्वर्णसिंहासनमधिरूढवान् । तदा तस्य सिंहासनस्याभूतपूर्वा श्रीरवर्धत । तां श्रियं कामरूपेशः अर्चयामास । कैः? रत्नैरेव पुष्पैः । अर्चनाय पुष्पाण्यावश्यकानि खलु । अत्र तु पुष्पाणां स्थाने रत्नान्यासन् । तत्त्वतः कामरूपेशः बहून्यमूल्यानि रत्नानि रघवे उपजहार । रघवे तेषां रत्नानां

समर्पणं तस्य सिंहासनाधिदेवतायाः श्रियः पादयोः पुष्पार्चनमेवासीदिति भावः ।

एवं सर्वानपि नृपान् विजित्य स विजयी रघुः स्वां पुरीं प्रति न्यवर्तत । युद्धयात्रायामेव सेनाकोलाहलाः श्रूयन्ते, परागा उद्धूयन्ते च । युद्धानन्तरं तु न तावान् धूलिपटलः संजायते, यावान् सति युद्धे वर्तमाने । तदा तु परागाः स्वयमेव शाम्यन्ति । रजसां तत्र शमनं कविरुत्प्रेक्षते ।यदा रघुः सम्राडभवत् तदा स एकच्छत्राधिपतिर्जातः । तदा अन्येषां नृपाणां शिरांसि छत्रशून्यान्यासन् । रघुस्तु, तानि शिरांसि नग्नीभूतान्यभवन्निति मत्वा स्वसेनापरागानाहूय एवमाज्ञापयामास । "हे परागाः युष्माकमतः परं अस्मत्सेना सहवासो न कार्यः । अतोऽधुना यूयं गच्छत । अस्मदधीनराज्येषु नग्नशीर्षाः सामन्तनृपाः सन्ति । तत्र गत्वा तेषां नग्नशिरसामावरणं कुरुत" । 'यथाऽऽज्ञापयति भवा" निति सादरं तामाज्ञां शीर्षेण गृहीत्वा ते परागाः तथैवाकुर्वन् । रजसां स्वतः शमनमेतया रीत्या कविना वर्णितम् ।

नगरं प्राप्य स विश्वजितं यज्ञमाजहार । दिग्विजयानन्तरं सार्वभौमैरनुष्ठीयमानो याग एव विश्वजित् । जैत्रयात्रायां विजितेभ्यो राजभ्यो यद्द आदत्तं तेन सह स्वकीयं सर्वस्वमपि तस्मिन् यज्ञे दक्षिणारूपेण दीयते । तथा स निस्स्वो भवति । चारित्रशुद्धेरग्निपरीक्षैवायं यागः । समस्तसुखभोगानामुपरि स्थितस्य राज्ञः स्वमनसैव निस्स्वतावरणं न खलु लघ्वी साहसिकता । यदि मनसोऽन्तस्तले स्वार्थस्य भोगासक्तेर्वा लवोऽपि स्यात् तर्हि कदापि न तेन तादृशं कर्म कर्तुं शक्यते । प्राचीनानां धर्मिष्ठानां राज्ञामिदमुत्तममुदाहरणम् । ते स्वार्थलाभार्थं न किमपि कर्माचरन्ति । सर्वमपि कृतं परार्थनिर्वहणार्थम् । उक्तमुदाहरति । सज्जनास्तु मेघसदृशा दृश्यन्ते । ते समुद्रात् लवणदूषितमपि सलिलमादाय शुद्धीकृत्य तृषितेषु प्रदेशेषु वर्षन्ति । एवमेव रघुः तत्र तत्र पुंजीभूताः संपदः स्वकरबलेनादाय सत्पात्रेष्ववर्षत् ।

अथ यागावसाने स रघुः स्वपुरमागतान् सामन्तनृपान् तत्तन्नगरं प्रति निवर्तयामास । तेषां मनांसि पराजयेन नितरां दूनान्यासन् । रघुः स्वहस्तेन प्रदत्तैस्तैस्तैः महद्भिः पुरस्करैः तान् प्रीणयामास । तेन तेषां हृदयानि

ासन्नान्यभवन् । ते राजानश्च यागसंभारार्थं चिराय स्वपुरेभ्यो निर्गताश्च । तेषां अन्तःपुरांगनाः 'मम प्राणनाथः अद्य आगमिष्यति, श्वः आगमिष्यति' त्यौत्सुक्यादाकुलाः तत्तन्नगरेष्वेव निवसन्ति । तासां विरहवेदनामनुभवन्तीनां अन्तःपुरांगनानां स्मरणेन ते राजानश्च प्रतिनिवर्तनायोत्कण्ठाकुलाः भवर्तन्त । तादृशानां तेषामेते पुरस्काराः स्वनगरनिवर्तनानुमतिश्चेति द्वयं महान्तमानन्दमजनयत् ।

निवर्तनावसरे ते सम्राजं एकैकशः पुनः पुनः प्रणेमुरित्यन्तिमं पद्यं वशदर्यति । राज्ञः पदयोः सार्वभौमलक्षणानि अविद्यन्त । ध्वजस्य ्लिशस्य आतपत्रस्य चाकारैः विचित्राः रेखा तयोरदृश्यन्त । तादृशयोर्लक्षण ्कयोः पादयोस्ते प्रणेमुः । तस्य पादतलपतनसौभाग्यमपि न सर्वेषां ्लभम् । तस्य सार्वभौमस्य प्रसादपात्रीभूतानामेव तत् सुलभम् भवति ।ः प्रस्थानावसरे तेषां केशभाराः पुष्पमालाभिरलंकृता आसन् । यदा ते प्रणेमु ्दा ताभ्यो मकरन्दः परागाश्च रघोः पादांगुलीषु लग्ना अभवन् । तस्माद् ्रुणास्ता अंगुल्यः गौरवर्णाः समपद्यन्त ।

[अधृष्यं = अनाक्रमणीयं । पृथुल = बृहत् । अभिष्टुत = स्तुत । अतःपरं = ्स्मादनन्तरं । खिन्नः = दुःखितः । मनःक्षतिः = मनोभंगः । अन्तरा = मध्ये । ्न्ववर्तन्त = अन्वकुर्वत । निजघ्नुः = निहतवन्तः । निजघान—निजघ्नतुः— ्जघ्नुः (लिट्, पर) । मत्वा + एव + इति + अर्थः । नग्नीभूतानि + अभवन् + ति । आजहार = आहृतवान्, प्रवर्तयामास । निःस्वतावरणं = दारिद्र्यस्वीकरण ्मानि = दुःखितानि । इति + औत्सुक्यात् + आकुलाः । प्रणनाम—प्रणेमतुः— णेमुः ।]

---

॥ अभ्यासः ॥

I) निर्दिष्टरीत्या वाक्यानि विपरिणमयत—

क) लिङो लङो वा रूपेषु विपरिणमय्य वाक्ययुग्मकानि एकीकुरुत ।

्था—रामः भवनं गच्छति; स अन्नं लभते ।

यदि रामः भवनं गच्छेत् तर्हि स अन्नं लभेत अथवा, रामः भवनं ्गच्छेत् चेत् अन्नं लभेत ।

आतपः प्रसरति; शैत्यं शान्तं भवति। यद्यातपः प्रासरिष्यत् तर्हि शैत्यं शान्तमभविष्यत्। अथवा आतपः प्रासरिष्यत् चेत् शैत्यं शान्तमभविष्यत्।

1) त्वं मधुरं गायति, अहं आकर्णयामि। 2) बालाः पाठान् पठन्ति ते विजयं लभन्ते। 3) कंदुकं लभे, क्रीडेयम्। 4) मया फलानि खाद्यन्ते, क्षुधा शाम्यति। 5) ताराभिः प्रकाश्यते, आकाशं दर्शनीयं भवति।

ख) प्रयोजकरूपेषु विपरिणमयत—

यथा—दीपः प्रकाशते। कन्या दीपं प्रकाशयते।

त्वं मार्गेण गच्छसि। जनाः त्वां मार्गेण गमयन्ति।

1) बालः पठति। 2) भृत्याः कर्म कुर्वन्ति। 3) शिशुः गच्छति 4) त्वं चन्द्रं पश्यसि। 5) वयं अन्नं भक्षयामः।

II अद्य पठितस्य पद्यपञ्चकस्यार्थं संस्कृतभाषायां लिखत।

III अधोनिर्दिष्टं पद्यपञ्चकमनुवदत।

१ रघुर्दिलीपात् साम्राज्यं लब्ध्वा पूर्वाधिकं बभौ।
प्रजा ररक्ष च तदा शरत्कालः समागतः॥

२ प्रतस्थे जैत्रयात्रायै पूर्वं पूर्वां दिशं, ततः।
वङ्गानथोत्कलान् जित्वा कलिङ्गाभिमुखं गतः॥

३ पाण्ड्यान् जित्वा केरलांश्च प्रययावपरान्तकान्
जयी स पारसीकानां शिरश्छित्त्वा विनिर्गतः॥

४ सिन्धुमुत्तीर्य काम्बोजान् जित्वाऽरुह्य हिमालयम्।
पर्वतीयैर्गणैर्युद्ध्वा प्राग्ज्योतिषमथाजयत्।

५ नमयन् कामरूपेशं मूलस्थानं न्यवर्तत॥
सर्वस्वदक्षिणं यज्ञं स विश्वजितमाहरत्॥

IV पाठारम्भे दत्तं पद्यसंक्षेपं अनुवदत।

---

# एकत्रिंशो दिवसः

अथात्र संभाषणशैलीपरिचायर्थम् 'एकभारतं' नाम किमपि नवीनं नाटकं प्रस्तार्यते ।

॥ कथासंक्षेपः ॥

[ नाटकस्यास्य इतिवृत्तं (कथा) केवलं सङ्कल्पसमाकलितं; न खलु पुराणादिभ्यः समुद्धृतम् । हिमालयादीनां पर्वतानां गङ्गादीनां नदीनां गम्भीरमहारोगादीनां च मूर्तत्वारोपात् (personification) एवात्र कथापात्रसृष्टिर्निरूह्यते ।

पितुर्हिमालयस्य द्वे पुत्र्यौ स्तः । ज्येष्ठा सिन्धुः, कनिष्ठा गंगा च । सिन्धुः माहम्मदैः अपहृता सती परधर्मं स्वीचकार । (सा पाकिस्तान् प्रदेशेन प्रवहति खलु) गंगां तु पिता हिमालयः सागराय ददौ । सा तु स्वभर्तुः सागरात् सततं बिभ्यती अवर्तत । विशङ्कटाकारः स भर्ता सदा गर्जन् बाहु-पुत्रमध्याट्टहासं कुर्वन् तां अभ्यापतति । परंतु, हिमालयो जामातुः सागरस्य विशालतां अगाधतां च सम्यग् जानन् अवर्तत । एते सर्वेऽपि भारतस्याभिवृद्धये निरन्तरं यतमाना अवर्तन्त ।

अत्र मरुः प्रतिनायकः । तस्य महिषी किल मरीचिका । प्रकम्पनः पुत्रश्च । महारोगादयस्तस्य सखायः । ते भारतभूमेर्नाशाय प्रयतन्ते । अन्ते नायकप्रतिनायकपक्षयोः परस्परं संघट्टनं संभवति । पराजितो मरुस्तिरोभवति । भारतं सर्वत्र सस्यश्यामलं च जायते ।]

॥ एकभारते प्रथमोऽङ्कः ॥

नान्दी

1 ब्रह्मेत्याहुर्यदीयामविरतिमृषयो राजसीं सर्गशक्तिं
स्थित्यर्थां सत्त्वशक्तिं सकलसुखकरीं विष्णुरित्यामनन्ति ।
धत्ते संज्ञां यदीया मृड इति विषमा तामसी ध्वंसशक्तिः
नित्यः सत्यः स मूर्तित्रयमयविभवः पातु वो विश्वरूपः ॥

---

टीका (Note)

विशङ्कटाकारः = बृहत्स्वरूपः । जामातुः (ऋ. पु. ष. ए) पुत्रीभर्तुः ।
नान्दी = नाटकादीनामादौ क्रियमाणा प्रार्थना ।
पद्यम् 1, सारः—ऋषयो यस्य सर्गशक्तिं ब्रह्मा इति आहुः, सत्त्वशक्तिं

(नान्द्यन्ते प्रविशन्ति धूतकुमारिकारूपाः एककण्ठतालपदविन्यासं गायन्त्यो नद्यः ।)

(संघगानम्)

भुवन पावनी भरत मेदिनी
विजयतां कलयतां भविकमखिलतनुभृताम् ।

तुहिनशैल रजत मुकुटतल्लजाभिशोभिनी
नद नदी कदंब धवल हार हृदयहारिणी (भुवन पावनी...)

उपरि पुष्करं नित्यभास्वरम्—
तव तनोति विरतिहीनमवनमुदितभास्करम्

मृदुल मलय पवन मन्द वीजनाद्विहर्षिणी
विवश निखिल जन्तु जाल जीवनाभिवर्षिणी । (भुवन पावनी...)

---

विष्णुः इति आमनन्ति, ध्वंसशक्तिः मृडः इति संज्ञां धत्ते, स विश्वरूपः वः पातु । अन्यानि विशेषणपदानि यथोचितं योजनीयानि ।

ब्रह्मा+इति+आहुः+यदीयां+अविरतिं+ऋषयः । विष्णुः+इति+आमनन्ति । आहुः=वदन्ति । यदीया=यस्य । अविरतिं=अविरामां । आमनन्ति=मन्यन्ते । धत्ते=दधाति । विषम×सम । मृडः=शिवः । ध्वंसः=नाशः । मूर्तित्रयमयः विभवः यस्य सः । सृष्टि स्थिति संहारात्मिकाः तिस्रो मूर्तय एव तस्य वैभवं इत्यर्थः । 'मय' प्रत्ययः 'तस्य विकारः' 'तदात्मकः' इत्यर्थे प्रयुज्यते । यथा-मृन्मयं पात्रं । करुणामयी देवी ।

यदीय—'ईय' इति प्रत्ययः षष्ठ्यर्थे पुरुषसर्वनामभिः सह प्रयुज्यते तादृशानि पदानि विशेषणविभागे अन्तर्भवन्ति । अतः तानि विशेष्याणां (नाम्नां) लिंगवचनादिकमनुसरन्ति । मम भार्यायाः=मदीयायाः भार्यायाः । तस्याः भर्त्रे=तदीयाय भर्त्रे । अस्माकं भवनेषु=अस्मदीयेषु भवनेषु । युष्मदस्मत् शब्दयोः एतादृशेषु रूपेषु वैविध्यमस्ति । मदीय=मामक or मामकीन । युष्मदीय=यौष्माक or यौष्माकीण ।

हृदय विमलतां स्फुटयतीव ताम्
स्फटिक विशददीर्घिकागणस्तवेह सुमहिताम् ।

परिचरत्यनर्घविकच सुमगणैश्च मधुरिमा–
ममल मञ्जुलस्मितैश्च शरदनूनमधुरिमा । (भुवन पावनी...)

जलनिधिर्भुजे मौक्तिकीं निजे
दधदजस्रमर्चतीव तावकांघ्रिपङ्कजे ।

तरु कदम्ब मृग निरन्तराद्रिविपिन शालिनी
ऋषि गणाभिगीत पूत महिम भार भासिनी । (भुवन पावनी)

---

पा धातुः पानार्थे रक्षणार्थे च प्रयुज्यते । पानार्थे सार्वधातुकरूपेषु 'पिब्' इत्यादेशो भवति । अयमेव विशेषः । पाति = रक्षति । पिबति = पानं करोति । पास्यति = रक्षिष्यति, पानं करिष्यति । अन्यत्रापि विशेषो दृश्यते । पात्वा = रक्षित्वा । पीत्वा = पानं कृत्वा । पातः, पीतः, निपीय ।

संघगानम्– 'भुवनपावनी.... तनुभृताम् । सारः—भारतभूमिः विजयताम् । सा अखिलजनानां शुभं विदधातु । कलयतां = विदधातु, तनोतु । भविकं = शुभं । तनुभृतां = (त. पु. ष. ब.)–जनानां । 'तुहिन.... हारिणी' । सारः—सा हिमालयरूपेण उत्कृष्टरजतकिरीटेन नितरां शोभते । तथा नदीसमूहरूपैः शुभ्रहारैः मनोहारगी च वर्तते । तुहिनं = हिमं । रजतं = रूप्यं । तल्लजः प्रकाण्ड इत्येतौ उत्कृष्टार्थे प्रयुज्येते । मुकुटतल्लजः = उत्कृष्टं मुकुटं । पुरुषप्रकाण्डं = उत्कृष्टः पुरुषः । नदः = जलप्रवाहः । कदम्बः = समूहः । धवलहारः शुभ्रमौक्तिकमाला । 'उपरि....भास्करम् ।' सारः— सूर्योदयेन नित्यभास्वरं आकाशं तव अविरतं रक्षणं कुरुते । पुष्करं = आकाशं तनोति = करोति । विरतिहीनं = विरामरहितं । अवनं = रक्षणं । उदितः भास्करः यस्मिन् तद् । 'मृदुल.......वर्षिणी' । सारः—मलयानिलस्य वीजनसुखमनुभूय सन्तुष्टा सा सकलजीविनां जीवितं जलं च वितरन्ती वर्तते । जीवनात् + विहर्षिणी । जालः = समूहः । जीवनं = जीवः जलं च । 'हृदय.......महिताम्' । सारः—इह भारते स्फटिकस्वच्छतटाकाः तव महितं मनोनैर्मल्यं स्पष्टीकुर्वन्ति इव । इह = अत्र । दीर्घिकागणः + तव +

(गानमन्रा प्रविशति गंगा)

गंगा—(विलोक्यात्मगतं) अहो! अयमेव गानमेलावसरः । मम गागमने विलंबः समापतितः । अथवाऽस्यां कर्मभूमौ सर्वत्रापि स्वातन्त्र्यदिनमुद्घुष्यते खलु ।

गोदावरी—(विलोक्य) अये! ज्येष्ठा गंगा समागता? ।
गंगा—वत्से, अप्यवसितो युष्माकं कार्यक्रमः ?
गोदा—नन्ववसित एव । तथाप्यस्मत्प्रतीक्षा न विफलीकृता ।
गंगा—कथमिव ?
गोदा—यतोऽन्ते सम्मिलिताऽसि ।
गंगा—अये कीदृशोऽभूदत्रत्य उत्सवः । श्रोतुमुत्सुकास्मि ।
गोदा—तर्हि शृणु ।

2 धर्मः सभापतिरभूदखिलागमज्ञः,
रंगेऽभवच्च समता जनचित्तहारी ।
स्वातन्त्र्यमुन्नमितवच्छबलां पताकां,
सत्यं तथाकुरुत भाषणमर्थगर्भम् ।

---

इह । दीर्घिका = तटाकः । 'परि चर...मधुरिमा' । सारः—इह उत्कृष्ट-विकसितपुष्पसमूहैः वसन्तः इमां भारतभूमिं परिचरति । अन्यूनमाधुर्यवती शरत् निर्मलमधुरमन्दहासैश्च इमां सेवते । परिचरति = सेवते । अनर्घ = उत्कृष्ट । विकच = विकसित । मधुः+इमां । मधुः = वसन्तः । शरत्+अनूनमधुरिमा = अन्यूनमाधुर्यवती । मधुरिमा = माधुर्यं । 'जलनिधिः... पंकजे' । सारः— समुद्रः स्वहस्ते मुक्तामणीन् धृत्वा सर्वदा तावकचरणकमले अर्चतीव । निजे भुजे = स्वहस्ते । मौक्तिकौं = तरंगरूपं मुक्ताहारं । दधत् = दधानः, धरन् । अजस्रं = सदा । अंघ्रिः = चरणः । 'तरु...भासिनी' । सारः—तरुगणैर्निबिडैरद्रिभिः मृगनिबिडैः वनैश्च राजन्ती मुनिजनगीतेन परिशुद्धमहिम्ना भासमाना च भारतमाता विजयताम् । निरन्तर = निबिड, अवकाशरहित । पूत = परिशुद्ध ।

विलम्बः = delay । समापतितः = संभूतः । अपि+अवसितः । अपि = किम्? अपि कुशलम्? = किं कुशलम्? ननु+अवसितः । कथमिव ॥

गंगा—हन्त! असुलभोऽयमवसरो नष्टः। तथापीदं वो निवेदनीय-मस्ति। सन्ति युष्माकमितोऽप्यधिकानि कर्तव्यानि। मया तु प्रतिजनपदं पर्यटन्त्या बह्ववलोकितमनुभूतं च। हन्त! भारताम्बाया विचित्रोऽयमधुनातनो दशाविशेषः। तथाहि—

3 आसारैर्जलधीकृते जनपदे मेघो वरीवृष्यते
देशानूष्मलितानशीतकिरणैर्दन्दह्यतेऽहस्करः।
लक्ष्यन्ते निबिडाः परं जनपदा भूयोऽपि सान्द्रा जनैः
यन्नापेक्षितमस्ति यत्र, ननु तत् तत्रैव पुञ्जीकृतम्॥

---

कथं? अत्रत्यः=अत्र संभूतः। तत्रत्य, कुत्रत्य, कुतस्त्य आदि। पद्यम्-2 गोदावरी कार्यक्रमे संबद्धान् विशिष्टातिथीन् परिचाययति। सारः—सकलशास्त्रपारङ्गतः धर्मः सभायां अध्यक्षपदमलंचकार। समस्तजनहृदयाकर्षको रंग आसीत्। स्वातन्त्र्यं वर्णशबलां पताकां उन्नमितवत्, अर्थात् पताकोन्नमनकर्म स्वातन्त्र्येण कृतम्। तथा सत्येन भाषणं च कृतम्। आगमः=वेदः। उन्नमितवत्=उन्नमयति स्म। शबला=विविधवर्णयुक्ता।

वः=युष्माकं। इतोऽपि=अस्मादपि। बहु+अवलोकितं। भूयोऽपि=पुनरपि। यद्+न+अपेक्षितं। तत्+तत्र+एव।

पद्यम्—3 आसारैः......पुञ्जीकृतम्। सारः—भारते प्रतिग्राम पर्यटनं कृतवती गंगा स्वानुभवं विवृणोति। यत्र प्रदेशे यद् न आवश्यकमस्ति तत्र तदेव सुलभं दृश्यते। इममाशयं आत्मवादत्रयेणोदाहरति। यो नाम ग्रामः जलधारापातैः समुद्रः संजातः तस्मिन् ग्रामे मेघः पुनरपि वर्षति। ऊष्मलितान् देशान् सूर्यः स्वैरुष्णैः किरणैः पुनरपि दहति। स्वतः सान्द्रा जनपदाः अनुदिनं जायमानैर्जनैः पुनरपि सान्द्रा दृश्यन्ते। किं बहुना? यत्र यद् न अपेक्षितं वर्तते तत्र तदेव पुञ्जीभवति। आसारः=धारावर्षः। वरीवृष्यते=नितरां अथवा पुनः पुनर्वर्षति। अशीतकिरणैः=उष्णरश्मिभिः। दन्दह्यते=नितरां अथवा पुनः पुनर्दहति। अहस्करः=सूर्यः। लक्ष्यन्ते=दृश्यन्ते। निबिडाः=सान्द्राः।

पर्णाशा—अहह! सत्यभाषिणि गंगे किमेवं भणसि? स्वातन्त्र्य-लाभादनन्तरं अस्मद्राष्ट्रमृद्ध्या सिद्ध्या च समध्यासितमिति त्वयैवासकृत् कथितम्। किमस्मानधुना परिहससि?

गंगा—किमयं विषयः परिहासस्य? वत्से, यत्सत्यमस्माकं स्वातन्त्र्य-मुपलब्धम्। तथापि तदन्यूनं कर्तुमस्मिन् भारतवर्षे बहवः प्रमेयाः समा-धातव्याः। पश्यास्मद्राष्ट्रस्याधुनिकीं दशाम्—

4 भाषा धर्म वसु प्रान्त वर्णादिभिरुपाधिभिः।
एकसूत्रोज्झितेष्वस्मास्वेकैकोपि विभाजितः॥

एवं च स्वातन्त्र्येणाविभक्तमपि विविधैरुपाधिभिर्बहुधाविभक्तं इमं भारतवर्षमेकीकर्तुं शक्ताः प्रशस्ताश्च कतिचन मार्गा मार्गणीयाः। तत्र तौ प्रमुखौ। एकस्त्वान्तरोऽन्यो बाह्यश्च। अत्राद्यो नैसर्गिकः सनातनश्च यः खलु बाह्यप्रकृतिभिरयथातथीकर्तुमशक्यः। पश्य,

5 लोकायालोकदात्री जयति दिविषदां भारती भारतेऽस्मिन्
प्रायः सर्वत्र सर्वा जनततिरिह संदृश्यतेऽध्यात्मनिष्ठा।
आचारास्ते समन्तादपगतकलुषाश्चार्षसिद्धान्तमूलाः
एकैकाभिर्विभक्तास्तनुभिरपि सदा चित्तमस्माकमेकम्।

---

भणसि=वदसि। अस्मद्राष्ट्र+ऋद्ध्या=समृद्ध्या। सिद्धिः=लाभः। समध्यासितं=समधिष्ठितं। त्वया+एव+असकृत्=अनेकशः, बहुवारम्। यत्सत्यं=सत्यमेव। पश्य+अस्मद्राष्ट्रस्य+आधुनिकीं।

पद्यम् 4 सारः—वयं एकसूत्रे ग्रथिता अपि भाषाधर्मवसुप्रान्तादिभि-र्हेतुभिः परस्परं विभक्ताः। वसु=धनं। उपाधिः=धर्मः, विशेषः। एकसूत्रोज्झितेषु अस्मासु एकैकः अपि। उज्झित=ग्रथित।

प्रशस्ताः=उत्कृष्टाः। मार्गणीयाः=अन्वेषणीयाः। नैसर्गिकः=स्वाभा-विकः। अयथातथीकर्तुम्=अन्यथाकर्तुम्। एकः तु आन्तरः अन्यः बाह्यः च।

पद्यम्-5 सारः- बाह्यप्रकृतिभिः अयथातथीकर्तुमशक्यं भारतस्य नैसर्गिकमैक्यं गंगा विशदयति। लोकाय प्रकाशं ददती देवभाषा अस्मिन्

द्वितीयस्तु जटिलः । यद्यस्माकमखिलैः कर्मभिस्तदर्थैरेव भूयते तर्हि स लघु समाधातुं शक्यः । समृद्धमन्नं सुलभं वस्त्रं सुदृढं भवनं च एकैकस्या- व्यावश्यकम् । प्रायशस्तन्निष्ठैव एकता दृढा भवति ।

सिप्रा–तथ्यमेव ज्येष्ठा भणति ।

गोदा–अये अविरतमिवास्याः कथितव्यम् प्रतिभाति ।

पर्णाशा– कथयत्वार्या ।

गङ्गा–अपि च किमु न श्रुतं युष्माभिः यत् किल भारतस्यैक्ये बाधामा- पादयन्तः केचन भीमाकारा इह सर्वत्राहिण्डन्त इति ।

6 तेषां ननु प्रमुख एव मरुर्यदाज्ञां
मूर्ध्ना वहन्त्यखिलनाशकराः करालाः
वात्याऽतिवृष्टिरतिभीषणचक्रवात–
स्तीव्राभितापजननी मृगतृष्णिका च ॥

---

भारते आसेतुहिमाचलं विजयते । अत्र सर्वेऽपि जनसमुदाया अध्यात्मनिष्ठाः वर्तन्ते । आचारास्तु आर्षसिद्धान्ते अधिष्ठिता एव । एवं च वयं शरीरैः विभिन्ना अपि अस्माकं हृदयं एकमेव । देवभाषा अध्यात्मिकवीक्षणस्वभावः आचाराः, हृदयविकाराश्च अस्माकं स्वाभाविकमैक्यं वर्धयन्ति । ईदृशमान्तर- मैक्यं बाह्यप्रकृतिर्निहन्तुं न शक्नोति ।

आलोकः =प्रकाशः । दिविषदां =देवानां । प्रायः =प्रायेण । ततिः = समूहः । अध्यात्मनिष्ठा =आध्यात्मिककार्येष्वधिष्ठिता । समन्तात् =सर्वत्र । अपगतकलुषाः =कालुष्यरहिताः । एकैकाभिः विभक्ताः तनुभिः अपि ।

जटिलः =सङ्कुलः, विषमः । कर्मभिः तदर्थैः भूयते =कर्माणि तदर्थानि भवन्ति (भावेप्रयोगः) । लघु =द्रुतं । तन्निष्ठा =तेषु अधिष्ठिता । तथ्यं =सत्यं । अये......भाति =अस्या वक्तव्यं नावसितं, किञ्चिदवशिष्टमिव ज्ञायते । प्रतिभाति =ज्ञायते, seems. बाधा =विघ्नः । आपादयन्तः = कुर्वन्तः । आहिण्डन्ते =अटन्ति, सञ्चरन्ति ।

पद्यम् —6 सारः — भारतस्यैक्ये बाधामुत्पादयन्तः ये ये वर्तन्ते इत्येतद् गंगा विशदीकरोति । तेषां विनाशकानां प्रमुखः मरुः । तस्याज्ञां वात्या अतिवृष्टिः चक्रवातः मरीचिका च मूर्ध्ना वहन्ति ।

गोदा—सत्यमेवार्यया कथितम्। अधुना त्वतिवृष्ट्या क्लिन्नाः क्लिष्टाश्च केचन पाण्ड्याः मदुपान्तेष्वटन्तो दृश्यन्ते। ते तु,

7 भाण्डैर्महाप्रमाणैः कुञ्चितगात्राः सगृह्यमृगवृन्दाः।
आबालादावृद्धाद् जना वलन्ते विशीर्णजीर्णपटाः ॥

सिप्रा—अस्ति च मदुपान्तप्रदेशेषु सर्वसंहारी प्रकम्पनपिता मरीचिकाजानिर्महामरुः। स तु मत्पार्श्वभूमिमसस्यश्यामलामप्राणिसञ्चारां च कर्तुमुद्युक्त इव दृश्यते। तथा हि,

8 बाष्पप्रायास्तिग्मतिग्मांशुतप्ताः वात्याघातैर्दूरमुत्सारिताभ्राः।
ज्वालाजालैः खेचरान् खेदयन्तः संदृश्यन्ते मारवास्ते प्रदेशाः ॥

गंगा—वत्से, सर्वमपि मया दृग्गोचरीकृतम्। वयं तु भारतस्यैक्यतृष्णातो व्याकुलाः स्मः। इदं तु राष्ट्रं वर्णप्रान्तादिभिः शतधा विभक्तम्। तदप्येकमेतदविवक्तमस्माकं प्रतिभाति। तदैक्यस्य विघ्नमापादयन्त एते रन्ध्रप्रहारिणः सर्वेऽप्युद्धाटनीयाः।

---

यदाज्ञां=यस्याज्ञां। मूर्ध्ना=शिरसा। अखिलनाशकराः=सर्वसंहारकाः। करालाः=भीकराः। वात्या=प्रचण्डवातः। चक्रवातः=चक्राकृत्या परिभ्रमन् वायुः। मृगतृष्णिका=मरीचिका।

क्लिन्नाः=जलार्द्राः। मदुपान्तेषु=मत्परिसरेषु। अटन्तः=चरन्तः।

पद्यम्—7, सारः—गोदावरी स्वानुभवं प्रस्तौति। तस्याः तीरप्रदेशेषु पाण्ड्याः सञ्चरन्ति। तेषां शरीराणि बृहदाकारान् भाण्डान् समुह्य कुञ्चितानि अर्थात् भुग्नानि (नतानि) सन्ति। ते आबालवृद्धं गृह्यमृगगणैः सह जीर्णपटानि परिधाय पर्यटन्ति।

मरीचिकाजानिः=मरीचिका जाया यस्य सः=मरीचिकाया भर्ता इत्यर्थः। जानकीजानिः=रामः। कौसल्याजानिः=दशरथः। असस्यश्यामलां अप्राणिसञ्चरां।

पद्यम्—8 सारः—सिप्रा स्वानुभवं विवृणोति। मत्परिसरेषु अत्यूष्मलमरुप्रदेशा वर्तन्ते। ते कठिनसूर्यकिरणसंतप्ताः भवन्ति। चण्डवातानामाघातैः मेघान् दूरमुत्सारयन्ति। ते स्वीयज्वालाभिः विहगान् तारकाश्च खेदयन्ति।

9 यं वा मरुः स्वबलतः खलतीकरोति
तं कुर्महे स्थलममुं पुलकांकुराक्तम् ।
चण्डातिवृष्टिरपि यं जलधीकरोति
तं तन्महे लघु पिपीलिकयाऽपि गम्यम् ॥ |

ततः सर्वा यूयमधुना भारतस्यैकतार्थमेकतानहृदयाः साधुकृतकर्तव्या भवत ।

10 कृष्णा त्वान्ध्राननूनाधिकजलसुभगान्, नर्मदा हैहयांस्तान्,
कावेरी चोलपाण्डयान् कलयतु, मुरला केरलान् केरपूर्णान् ।
ब्रह्मावर्तान् शतद्रुः सरिदथ, कपिशा चोत्कलान्, दण्डकान्तान्,
गोदावर्य, प्यवन्तीन् समधिकविभवान् निर्मलापा च सिप्रा ॥

---

तिग्मः =अत्युष्णः । तिग्मांशुः =सूर्यः । दूरं उत्सारितानि अभ्राणि यैः ते । अभ्रं =मेघः । खेचरान् =गगनचारिणः । मारवाः =मरुप्रदेशसंबन्धिनः । दृग्गोचरीकृतं =दृष्टम् । ऐश्यतृष्णातः =ऐश्वर्याभिलाषात् । तदपि =तथापि । एकं +एतद् । रन्ध्रप्रहारिणः =अवसरे प्रहर्तुमुद्यताः । उच्चाटनीयाः =निष्कासनीयाः ।

पद्यम्–9 सारः–मरुः यं प्रदेशं स्वशक्त्या वृक्षलतादिरहितं करोति, तं वयं सस्यादिकान् प्ररोप्य रोमाञ्चितान् कुर्मः । तथा यं देशं अतिवृष्टिः समुद्रसदृशं करोति, तं पिपीलिकाभिरपि चरितुं शक्यं तन्मः । तनोतिगणे गणचिह्नः उत्तमपुरुषे द्विबहुवचनयोः क्वचित् लुप्यते । तनुमः तन्मः, । तन्महे, तनुमहे । कृधातोस्तु नित्यं लोपः । कुर्वः कुर्वहे, कुर्मः, कुर्महे स्वबलतः =स्वशक्त्या । खलतीकरोति–लुप्तसस्यं करोति । खलतिः =लुप्तकेशः । (bald). आक्त =सहित । चण्ड =भीकर । पिपीलिका =ant. एकतार्थं = ऐक्याय । एकतानहृदयाः= एकाग्रचित्ताः । साधु कृतकर्तव्या= सम्यक् कर्तव्यं कृतवत्यः ।

पद्यम्—10 सारः ।—ज्येष्ठा गंगा स्वकनिष्ठाः कृष्णानर्मदाद्याः स्वस्वकर्तव्येषु नियुंक्ते । कृष्णा अन्यूनाधिकजलदानेन आन्ध्रप्रदेशं सुभगं करोतु । नर्मदा हैहयप्रदेशं, कावेरी चोलपाण्डयप्रदेशं च अनूनाधिकजलसुभगं करोतु । तथा मुरला केरलदेशं केरवृक्षैः समृद्धं कलयतु । अथ शतद्रुनदी ब्रह्मावर्तान्, कपिशा उत्कलान्, गोदावरी दण्डकारण्यपरिसरान् तथा निर्मलजला सिप्रा अवन्तीन् च समृद्धविभवान् करोतु ।

गोदा—यथाऽदिशत्यार्या ।

गङ्गा—अपि चास्मिन् कर्मणि पिता पितृव्याश्चाऽनूनाधिकं साहाय्यं करिष्यन्ति । तथा हि,

11 रोगान् पिता ह्योषधिभी रुरुत्सुः
वात्यां च विन्ध्यस्तरुबाहुदण्डैः ।
चण्डातपं चन्द्रिकया समानं
कुर्याच्च सह्यो मलयानिलेन ॥

---

हैहयान्+तान् । च+उत्कलान् । गोदावरी+अपि+अवन्तीन् । निर्मलाः आपः यस्याः सा=निर्मलापा । आपः=जलम् । 'अप्' शब्दः बहुवचने एव प्रयुज्यते । अस्य बहुवचनरूपाणि यथा—आपः अपः अद्भिः अद्भ्यः अद्भ्यः अपां अप्सु । आदिशति आज्ञापयति । पितृव्याः=पितुः भ्रातरः । न ऊनं न अधिकं च=अनूनाधिकं । यावदावश्यकं तावत् ।

पद्यम्—11 सारः—कथं पिता पितृव्याश्च साहाय्यं करिष्यन्तीति विव्रियते । पिता हिमालयः ओषधिभिः रोगान् रोद्धुमिच्छति । विन्ध्यः उन्नतैः तरुबाहुभिः चण्डवातं रुन्धन् वर्तते । सह्यस्तु मलयानिलेन चण्डातपं चन्द्रिकया समानं च कुर्यात् । ओषधिभिः+रुरुत्सुः=ओषधिभी रुरुत्सुः । क्वचित् रेफात् पूर्वो विसर्गो लुप्यते । तत्पूर्वः स्वरः दीर्घो भवति च । हरिः +रमते=हरी रमते ।

पद्यम्—12 सारः—अहमिदं करिष्यामि, अहमिदं करिष्यामि इति प्रतिज्ञां सर्वाः कुर्वन्ति । गंगा प्रतिजानीते—अहं मत्परिसरेषु वृक्षान् फल-भरनम्रान् करिष्यामि । गोदावरी—अहं स्वकीयेष्ववकाशेषु अतिवेगं जलप्रवाहं प्रतिनिवर्त्य सलिलव्याप्तिं परिमितां करिष्ये । सिप्रा—अहं क्षेत्रेषु सस्यानि संवर्ध्य कर्षकाणां अभिलाषान् सफलान् कुर्याम् । पर्णाशा—अहं आवश्यकेषु स्थलेषु जलसंभरणे दत्तावधाना च भवेयम् ।

फलानां निवहैः समाभुग्नाभिः शाखाभिः सहितैः द्रुमैः आढ्यान् । समाभुग्नः=आकुञ्चितः आनम्रः । आढ्य=युक्त । प्रत्याकृष्ट=प्रतिनिवर्तित । परिमितं सलिलं येषु तान् । क्षेत्राणि+अक्षामसस्यानि+अविकल.......

(एका नद्यः प्रतिज्ञां कुर्वन्ति)

12 गङ्गा—कुर्वे सर्वान् प्रदेशान् फलनिवहसमाभुग्नशाखद्रुमाढ्यान्
गोदा—प्रत्याकृष्टैः प्रवाहैः परिमितसलिलान्स्वावकाशान् विदध्याम् ।
सिप्रा—क्षेत्राण्यक्षामसस्यान्यविफलकृषकव्रातवाञ्छानि चाहम्
पर्णाशा—यत्रेष्टं तत्र पाथोभरणविधिषु चाप्यप्रमत्ता भवेयम् ॥

॥ यवनिका ॥

---

अक्षामाणि सस्यानि येषु तानि । अक्षाम= अक्षीण । व्रातः= समूहः । वाञ्छा= आग्रहः । अविकलाः कृषकव्रातवाञ्छाः येषु तानि । पाथस्= जलं । च+अपि+अप्रमत्ता =प्रमादरहिता ।

प्रथमोऽङ्कः

॥ अभ्यासः ॥

1) अद्य पठितं एकभारतप्रथमाङ्कमनुवदत (Translate)
2) प्रथमाङ्कस्य कथासारं संस्कृतभाषायां संक्षिप्य लिखत ।

3) कमपि विषयमधिकृत्य पुत्रेण सह मात्रा कृतं संवादं स्वभावनानुसारं संस्कृतभाषायां लिखत ।

4) अधोनिर्दिष्टानां पद्यानाँ अन्वयं लिखतः—
 1) ब्रह्मेत्याहु........। 2) आसारैर्जलधौ........ ।
 3) लोकायालोकदात्री....... । 4) रोगान पिता ह्योषधिभिः....... ।

5) प्रथमद्वितीय पाठयोः पुनरावर्तनं (Revision) कृत्वा पठितपूर्वाः विषयाः स्थिरीक्रियन्ताम् ।

6) अधोदत्तस्य पद्यस्य अन्वयमर्थम् च लिखत—
[ क्रिस्तोः पश्चात् सप्तमे शतके वर्तमानः कश्चिन्महाकविरासीद् भवभूतिः । स स्वरचितेषु नाटकेषु नवनवकल्पनातत्पर आसीत् । अतः स परम्परापथ-विरसानामन्येषां शुष्कपण्डितानां कवीनां च अवज्ञाया अवगणनायाश्च पात्रमभूत् । ईदृशानां निन्दाशतानां शरव्यं भूत्वापि स आत्मधैर्यम् (confidence) न विजहाति । (शरव्यं =लक्ष्यं । विजहाति =त्यजति) ]

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि, तान् प्रति नैष यत्नः।
उत्पत्स्यते च मम कोपि समानधर्मा,
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥

इह =अत्र, अस्मिन् लोके। प्रथयन्ति =प्रसारयन्ति। अवज्ञा =निन्दा। किमपि =किञ्चित् 'something'. न+एषः। उत्पत्स्यते =जनिष्यति। समानधर्मा =तुल्यगुणः। समानः धर्मः यस्य सः। बहुव्रीहिसमासे अन्तिमो धर्मशब्दो नकारान्तो भवति। हि+अयं। विपुला =विशाला। पृथ्वी =भूमिः ॥

7) अधोदत्तस्य पद्यस्य सारं लिखत। (गजवर्णनम्)

करिवर! गजवर! चरसि कथम्?
गिरिरिव तव वपुरतिपृथुलम् ॥

श्रवणपुटं त्विदमति विपुलम्
नयनयुगं तव मशकतुलम् ॥

अजगरगरिमा तव शुण्डा
वलयति वल्गति चलति सदा ॥

मुखतो ननु ते दीर्घतमं
स्फुटितमहो बत शृङ्गयुगम् ॥

आकृतिरियमतिभयजननी
तादृक् त्वं तु बिभेषि नरात् ॥

अनुसरसि स तं भीमस्त्वं
विबलं सबलो लघुमलघुः ॥

वनचर! गिरिचर! सुलभफलम्
तरुनिबिडं च विहाय वनम्,

फलजलविकलं देशमिमं
किमिति समाया विरलरसम्? ॥

तनयाः कति ते सन्ति वने ?
वसति वने किमु तज्जननी ?

स्वगृहं याहि वनं, तनयाः
पितरं प्राप्य वसन्तु सुखम् ॥

मशकं =Mosquito. अजगरः =Wild Snake. वलयति =Coils' वल्गति= Twists. विहाय =त्यक्त्वा। समायाः =आगच्छः।

# द्वात्रिंशो दिवसः

एक भारते द्वितीयोऽङ्कः ।

(ततः प्रविशति रोषारुणाक्ष उच्चैस्तरमारटन् मरुः)

मरुः—क इमे पाटच्चराः । कस्तेषां विक्रमः । सर्वेऽप्येकीभूताः भारतवर्षाद् मामुत्सारयितुमुत्सहन्ते । (किञ्चिद्विचिन्त्य) अस्ति मे मरीचिका महिषी । सा तु सर्वानपि वशीकर्तुम् प्रभवति । (नेपथ्याभिमुखमवलोक्य) अयि, मरीचिके. क्वासि प्रेयसि ? अरी मत्प्राधिके सर्वचराचर प्रतारण निपुणे आयाह्यायाहि । त्वां प्रतीक्षमाणस्य मे क्षणाः वत्सरीभूताः । (कर्णम् दत्वा) किं कथितम् ? "वत्सः प्रकम्पनः सुदूरं गत" इति ? तर्हि स आयातु । तावत् स्वकलायामेव व्यापृता वर्तस्व । (परिक्रम्य पुनरपि कर्णम् दत्वा) आः मत्प्रियसखः महारोग आयातीव । अयं कांस्यतालसदृशस्वनं काममाम्रेडमानः शंखशकलसदृक्षं श्लेष्मनिष्ठीवमुद्गिरमाणः मल्लातकफल संकाशैः स्फोटकदर्भैः पूयशोणितस्रोतोभिः अनन्तरशरीरान्तरः श्वासधारा विस्फारित पार्श्वास्थिबन्धो महारोग इत एवागच्छति ।

(यथानिर्दिष्टवेषः महारोगः प्रविशति ।

---

॥ द्वितीयोऽङ्कः ॥

रोषारुणाक्षः =रोषेण अरुणे अक्षिणी यस्य सः, कोपरक्तनयनः । अक्षिशब्दः बहुव्रीहौ आकारान्तो भवति । आरटन् =गर्जन् । के+इमे । पाटच्चराः =चोराः । उत्सारयितुं =निष्कासयितुं । प्रभवति =शक्नोति । नेपथ्यं =Green room. क्व+असि । प्रतारणं =वञ्चना । आयाहि+आयाहि =आगच्छ । कर्णम् दत्वा =दूरात् मरिचिकायाः शब्दः श्रूयते इति नटित्वा । स्वकला =परवञ्चनकला । आयाति+इव । कांस्यतालः = a drum made of brass. स्वनः =शब्दः । कासः =cough. आम्रेडमानः =आवर्तमानः । सदृक्षं =सदृशं । श्लेष्मा =कफः । निष्ठीवः = spittle. श्लेष्मन्+निष्ठीवः =श्लेष्मनिष्ठीवः । समासे पूर्वपदानां अन्तिमो

मरुः—(उपसृत्य) अहो न खलु भोः, क्कासीः प्रियसख। कस्को वार्ता-विशेषः। आयाह्यास्यताम्! (इति हस्तसङ्केतं करोति)

महारोगः—(आसीनः) प्रभो, अयमत्रभवते सप्रश्रयः प्रणामः। अत्रभवतः कृपया यच्चिन्त्यते तत्तथैव प्रायशः साधितं भवति। तथाहि—

13 मद्रेष्वद्य विषूचिका विसृमरा जागर्ति, कर्णाटके-
ष्वृत्सृष्टाः कठिनार्बुदा, नयनरुग्जालानि चावन्तिषु।
काश्मीरेषु विषज्वरा विदधते सांहारिकं ताण्डवं
यं देशं प्रविशामि सोऽतिकरुणं व्याक्रोशतीवानिशम्॥

अपिच—

---

नकारो लुप्यते। यथा—राजन्+पुरुषः=राजपुरुषः। व्यञ्जनप्रत्ययेऽपि नलोपो भवति। यथा—महात्मन्+भिः=महात्मभिः धनिन्+सु= धनिषु। उद्गिरमाणः=उद्वमन्। भल्लातकं=marking nut. संकाशः= सदृशः। स्फोटः=व्रणं। पूयं=pus. शोणितं=रक्तं। स्रोतस=प्रवाहः। अनन्तरशरीरान्तरः=व्याप्तशरीरः। श्वास......बन्धः=यस्य श्वासोच्छ्वास-समये पार्श्वास्थीनि विकसन्ति सङ्कुचन्ति च, सः। विस्फारित=विकसित। उपसृत्य=समीपं गत्वा। अहोनुखलुभोः=आश्चर्यादिविकाराधिक्यद्योतनार्थम् एतानि निपातानि एकीकृत्य प्रयुज्यन्ते। क्व+आसीः। कः+कः=कस्कः। विस्मयादिविकाराणामाधिक्ये किंशब्दस्यविसर्गस्य सकारदेशोऽत्र विशेषः। कुतः+कुतः=कुतस्कुतः। आयाहि+आस्यताम्। हस्तसङ्केतं करोति= हस्तेन सूचयति। 'अत्रभवान्', 'तत्रभवान्' इत्यादरातिशयार्थम् प्रयुज्यते भवान् इत्यर्थः। सप्रश्रयः=सविनयः।

पद्यम्—13 सारः—महारोगः स्वविजयवार्तां निवेदयति। मद्रराज्ये विषूचिका व्याप्ता वर्तते। कर्णाटकेषु कठिनार्बुदा प्रसारिताः। अवन्तिषु नेत्ररोगाश्च विसृष्टाः। काश्मीरेषु विषज्वराः संहारताण्डवं तन्वन्ति। अहं यत्र गच्छामि स देशः अतिदीनं रोदितीव अर्थात् क्रन्दति इति मन्ये।

विसृमरा=व्यापिनी। जागर्ति=सोल्लासं वर्तते, जागरूका वर्तते। उत्सृष्टाः=विसृष्टाः। रुग्जालानि=रोगसमूहाः। व्याक्रोशति=रोदिति। अनिशं=सदा। वि+सृ+मर। शतृ, शानच्, तृच् प्रत्ययानां स्थाने

14 भर्ता पश्यति नो प्रियामभिमुखं कोठङ्कैरदूषितां ;
पत्नी नैव तथा पतिं गणयति प्रक्षुब्ध यक्ष्मामयम् ।
बाल व्याधि हतान् स्तनंधय शिशून् रात्रंदिवं क्रोशतः
शप्त्वा स्थण्डिलके क्षिपन्ति विकलाः पामातुरा मातरः ।

मरुः–एखे विध्वंसकात्मकस्य भगवतः कृपया सर्वमप्यस्मत् कुशलायैव । यतः ।

15 दुर्भिक्षमस्ति मदभीष्टनिदेशकारि
वामा चकास्ति निपुणा न मरीचिका मे ।
आज्ञाकरोऽस्ति सविधेऽखिलभूतचक्र
विभ्रामणेऽतिनिपुणो मम चक्रवातः ॥

अपिचैतन्मे महद्भागधेयं; यदत्र,

---

अर्थात् वर्तमानाङ्गक्रियार्थे अधोनिर्दिष्टाः प्रत्यया अपि प्रयुज्यन्ते । 1) अक । निन्द्—निन्दक =निन्दत् । हिंसक क्षेपक लेखक आस्वादक आदयः । 2) अन । चल्—चलन=चलत् । कम्पन=कम्पमान । कोपन, कौसल्यानन्द-वर्धनः । 3) उक । पत्—पातुक=पतत् । भावुक, कामुक । 4) । मर। सृ-सृमर =सरत् । अद्मर, घस्मर । 5) वर । जि—जित्वर =जयत् । पीवर, स्थावर । 6) उर । विद्— विदूर =विदत् । भासुर, भङ्गुर । 7) र । दीप्-दीप्र= दीप्यमान । कम्र, कम्प्र । 8) आलु । स्पृह स्पृहयालु =स्पृहयत् । दयालु, निद्रालु । 9) इष्णु । वृध्—वर्धिष्णु= वर्धमान । सहिष्णु, उत्पतिष्णु ।

पद्यम्—14 सारः—रोगाः तत्र तत्र जाग्रतीति कथितं । (जागर्ति जागृतः जाग्रति) अपि च तत्रत्यानां जनानां भार्याभर्तृपुत्रादिबन्धमपि छेतुमहं प्रभवामीति वर्ण्यते । कुष्ठादि त्वग्रोगदूषितां प्रियां भर्ता अभिमुखं न पश्यति । क्वचित् पत्नी क्षयबाधापीडितं स्वभर्तारं नैव वीक्षते च । इतरत्र तु पामभिरातुरा मातरः विवशाः सत्यः बालव्याधिपीडने । दिवानिशं क्रन्दतः शिशून् अङ्कात् उद्धृत्य निर्दयं भूतले विक्षिपन्ति ।

कोठः=कुष्ठं । यक्ष्म =क्षयरोगः । व्याधिहतान्=रोगपीडितान् । स्तनन्धयः=स्तनं पिबन् । रात्रिन्दिवं=अहोरात्रं । विकलाः=विवशाः । पामन्=scab. विध्वंसकात्मकः=नाशात्मकः । सर्वम्+अपि+अस्मत्+कुशलाय+एव ।

पद्यम्—15 सारः–स्वकृत्यनिर्वहणे मम बान्धवाः सुहृदश्च सर्वथा साहाय्यं कुर्युरिति मरुः स्वयमाश्वसिति । मदभीष्टनिर्वहणे तत्परं दुर्भिक्ष

16 साहाय्यं कुरुते सर्वरोगाणामाकरो भवान् ।
नैराश्येऽपजये क्लेशे तेजोहानावनाकुलम् ॥

महारोगः—तथापि प्रभो, क्वचन मे बाधाश्च संभवन्ति ।

मरुः—कीदृशी तव बाधा ?

महारोगः—यत्राहं रोगाणां बीजमावपामि तत्र तदपोहनैकतानाः काश्चन महौषधयः कृतसन्निधानाः दृश्यन्ते ।

मरुः—का नाम ताः ? कुत एतत् ? कथमेतत् ?

महा—तदेव ममाप्यद्भुतमादधाति । तास्तु काश्चन मूलैः काश्चन फलैः काश्चन महौषधैः पत्रैः सुमैश्च तान् परिचरन्ति । मयोप्तानि कोटिशो बीजानि तत्क्षण एव नश्यन्ति । तथाहि—

17 लुठन्ति ये परिगतयातनाकुलाः
क्षमातले विलपनमन्दजल्पनाः ।
महौषधैः परिचरितास्त्वनुत्तमैः
भवन्ति ते सुखमसृणाः क्षणान्तरे ॥

---

मदन्तिके वर्तते । वञ्चनानिपुणा मरीचिका मे पत्नी सर्वथा मम स्वाधीनाऽस्ति । सर्वचराचराणां चक्रभ्रमणकर्मणि अतिनिपुणः चक्रवातो ममाज्ञानुवर्ती च विराजते ।

मदभीष्टं=मम अभीष्टम् । युष्मदस्मच्छब्दयोः समासे एकवचनस्य 'त्वत्' 'मत्' इत्यादेशो भवति । तव गृहं त्वद्गृहं । मम पिता मत्पिता । निदेशः= आज्ञा । चकास्ति=शोभते । सविधे=समीपे । अपि+च+एतत्+मे ।

पद्यम् — 16 सारः—यत्र यत्र पराजयो भवति तत्र तत्र महारोगः मरोः सहायो भवतीति कथ्यते । आकरः=निधानं । सर्वरोगणामाकरः भवान् नैराश्ये, अपजये, क्लेशे, तेजोहानौ अनाकुलं साहय्यं कुरुते ।

तदपोहनैकतानाः=तेषां अपोहने दूरीकरणे बद्धश्रद्धाः । वप्+त= उप्त, scwn. कृतसन्निधानाः=सन्निहिताः ।

पद्यम् 17 सारः— ये नाम मदाक्रमणेन पीडिताः ते फलमूलादीनां परिचरणेन क्षणादेव सुखं प्राप्नुवन्ति । सर्वाङ्गेषु व्याप्तया कठिनवेदनया

मरुः—अहो नु खलु भोः ! कास्ताः क्षुद्रौषधयोऽस्मत्प्रतिद्वन्द्विन्यः । यदि सन्ति तादृश्यस्तर्हि ता अपि शोषयितुं अस्मत्कलत्रं अलंभवति । अथवा, अस्ति मे वत्सः प्रकम्पनः । स ताः उन्मूलयिष्यति । (नेपथ्याभिमुखमवलोक्य) अरी सुन्दरि, सर्वाकर्षिणि, सकलापकर्षिणि, चञ्चलस्वभाविनि, कुत्रासि त्वं महामाये । आयाह्यायाहि । (दूरत आयान्तीं मरिचिकां दृष्ट्वा)

18 नृत्यन्ती सा रोदसोरन्तराले
तृष्णामुष्णोत्तापिनीं वर्धयन्ती ।
आयात्यस्मत्प्रेयसी साधुशीला
वत्सस्योन्नद्धांसके न्यस्तहस्ता ॥

(ततः प्रविशति वत्सप्रकम्पनेन सह मरीचिका)
मरीचिका—(उपसृत्य) जयतु जयत्वार्यपुत्रः ।

---

विवशा ये जनाः विलप्य विलप्य मन्दीभूतभाषणशक्तयः भूतले लुठन्ति अर्थात् इतस्ततः परिवर्तनं कुर्वते, ते एव अनुत्तमैः महौषधैः परिचरिताः क्षणान्तरे एव सुखस्निग्धा भवन्ति । परिचरिताः+नु+अनुत्तमैः=अत्युत्कृष्टैः ie. अस्मादुत्तमं न किञ्चिदस्तीति । लुठन्ति=परिवर्तनं कुर्वन्ति (roll) परिगत= सर्वाङ्गेषु व्याप्त ।

क्षुद्र=निस्सारः । तादृश्यः+तर्हि । कलत्रं=भार्या । मित्र कलत्रशब्दौ नपुंसके एव प्रयुज्येते । eg. रामः मम मित्रम् । लक्ष्मीः विष्णोः कलत्रम् । अलंभवति=शक्नोति । अपकर्षिणी=नाशिनी ।

पद्यम्—18 सारः । मरुः दूरादायान्तीं मरीचिकां वर्णयति । अहो! अस्मत्प्रेयसी आयाति । कथम्? आकाशस्य भूमेश्च अन्तराले नृत्यन्ती, उष्णेन अन्तर्बहिश्च तृष्णां वर्धयन्ती, वत्सस्य प्रकम्पनस्य उन्नते अंसे हस्तं विन्यस्य सा साधुशीला मत्प्रेयसी मां आयाति ।

रोदसोः=द्यावापृथिव्योः, भूमेराकाशस्य चान्तराले । उन्नद्धांसके= उन्नतस्कन्धे । अंसः=shoulder. न्यस्तहस्ता=न्यस्तः हस्तः यया सा, हस्तं न्यस्तवती । न्यस्त=अर्पित । उपसृत्य=समीपं गत्वा । विक्रियाविशेषाः= कर्माणि । समुन्मीलिताः=समुन्मिषिताः । नयनगोचरीभूतः=यः नयनयोर्गोचरोऽभवत् सः=दृष्टः । गोचरः=विषयः । मंक्षु=द्रुतं । जर्जरितः=

मरुः—अहो नु खलु भोः, आगताऽस्माकं प्रेयसी ! अयमस्माकं वत्सः प्रकम्पनः । आयाहि वत्स आयाहि । अङ्कमुपविश । अद्य किं किमुद्भुतं कर्म कृतम् ?

मरीचिका—कथमेतत्कथनीयम् ? कियन्तस्तस्य विक्रियाविशेषाः! । शैशवसाधारणैश्चापलैःस्वयमुन्मीलितास्ते सन्दर्शकानां कौतुकमादधिरे ।

मरुः—प्रिये, वत्सः कथयतु ।

प्रकम्पनः—तात, अद्याहं बहुदूरं गतः । मध्येमार्गं कश्चन कोलाहला-कलितो ग्रामो नयनगोचरीभूतः । स मया मंक्षु जर्जरितः । बहवोऽर्भकाः जरठाश्च गृहभित्तिकानामन्तः प्रपिष्टाश्च । अहो कियान् श्रवणमधुरोऽस्मावार्तनादः । कियदाकर्षकं तदुदग्राट्टालक निकर विपाटन कटकटायमानमारटितम् । अहं तु क्वचन नृत्यन् कुहचनाट्टहासं कुर्वन् कुत्रचिन्निरन्तरं निघ्नन् हन्त ! तात कीदृशी तदाऽसीत् सा मम जवयात्रा !

मरुः—सुष्ठु कृतं वत्स ! एवं सर्वघातुकः सन् चिरं जीव ।

मरीः—ततोऽपि कथय वत्स किं संवृत्तमिति ।

प्रकः—अथच श्रूयतां तात ! ततो मया मध्येमार्गं काचन सवयाः कुमारिका दृष्टा । नाम्ना साऽतिवृष्टिरिति प्रथिता । हन्त ! कीदृशं तस्या रूपसौभगम् । सा त्वकस्मादेव—

19 उच्चावचोद्भट तटित् प्रकटाट्टहासा
मत्त द्विपेन्द्र कर सन्निभ तीव्र धारा ।
उत्कर्दमाऽन्धतमसीकृतचक्रवाला
चित्तं जहार कबलीकृतभानुबिम्बा ॥

---

भग्नः । अर्भकाः= शिशवः । जरठाः= वृद्धाः । प्रपिष्टाः= मृदिताः । उदग्र= उन्नत । अट्टालकः= सौधं । निकरः =समूहः । विपाटनं= ध्वंसनं कटकटायमानं =कटकटेति शब्दायमानं । आरटितं= शब्दः । उन्नतसौधानां ध्वंसने जातः कटकटशब्दः । क्वचन =कुत्रचित् । निघ्नन् =प्रहरन् । सुष्ठु= सम्यक् । घातुकः= नाशकः । सवयाः (स. स्त्री. प्र. ए.) समानवयस्का । नाम्ना अतिवृष्टिः इति प्रथिता =अतिवृष्टिरिति नाम । राजा दशरथो नाम्ना or नाम्ना दशरथो राजा =दशरथो नाम राजा । तु+अकस्मात् = यदृच्छया ।

पद्यम्—19 सारः— सा अतिवृष्टिः मम हृदयमाचकर्षेति संक्षेपः । कथं? क्रमरहिताभिः उज्ज्वलाभिःविद्युद्भिः प्रकटमट्टहासं कुर्वती, । मत्तगजकरप्रमाणां

ततश्च तात, अहं तु तया सहेतस्ततो विक्रीडन् बहुषु जनपदेषु क्षणमा-त्रेण व्यचरम् । यन्मयोत्पादितं तत् नचिरादेव साऽप्लावयत् । समग्राणि क्षेत्राणि सपरिच्छदानि गृहाणि युगपदेव प्रणष्टानि । निरन्नं निरालंबं निराशं च सर्वत्रापि मानुष्यकमदृश्यत । हा हन्त! तात, किं जानाति कियद्वा मे मन-सश्चारितार्थ्यम्?

मरुः—वत्स! चिरं जीव। पितृहितानुवर्ती वर्तस्व। (मरीचिकां प्रति) अयि चण्डिके अद्यावामरिभिरप्यनतिक्रमणीयस्यास्यातिथेयौ संवृत्तौ। तं कैश्चन पदविन्यासैर्गानालापैश्च रमय। वत्स! प्रकम्पन त्वमपि मातुर्द्वितीयो भव।

मरीः—(वत्सं हस्ते गृहीत्वा नृत्यति)
धिं धिमिद्धिमि धिं धिमिद्धिमि धिधिमिद्धिमि धं ।

---

जलधारां वर्षन्ती, सर्वत्र पङ्कमुत्पादयन्ती, दिगन्तरालं अन्धतमसावृतं तन्वती सूर्यबिंबं कबलीकृत्य अभिमुखमायान्ती सा अतिवृष्टिः मम चित्तमाचकर्ष।

उच्चावच=विषम, क्रमरहित। मत्तद्विपेन्द्रः= मत्तगजः । द्विपः= गजः। सन्निभ= सदृश। कर्दमः =पङ्कः। उत्कर्दमा =पङ्कमुत्किरन्ती। अन्ध....वाला= चक्रवालं अन्धतमसं कृतवती। भानुबिंबं कवलीकृतवती। सह+इतस्ततः। उत्पाटितं =जर्जरितं। नचिरात् =झटिति। अप्लावयत्= प्रवाहयति स्म। मातुः द्वितीयः =मातुः सहायः।

पूयशोणित इत्यादिगानस्य सारः—इदं जगत्त्रयं पूयैः रक्तैश्च दुर्गन्धि भवतु। सर्वेषामपि जनानां दन्ताः पतन्तु। सर्वेऽपि खलतयः पलिताः जर्जराश्च भवन्तु। सर्वत्र पिटकाः कासाः पीनसाश्च विलसन्तु। पूयः= Pus. पूतिगन्धि =दुर्गन्धि । नितान्तं =नितरां । च्युतिः =भंगः। आक्रुष्टा =क्रोधात् गर्जन्ती। गलित =स्रस्त, पतित। दशनः =दन्तः। मुखशतं= बहूनि मुखानि। खलतिः= bald: पलितः =शुभ्रकेशः। भान्तु =लसन्तु। पिटक= ulcer. कासः =cough. पीनसः= cold. दग्धं= (दह्+त) भस्मीभूतं। दुर्भिक्षं इव आयाति। इतोमुखं= अस्म-दभिमुखं। दर्शनीया एव अस्य आकृतिः। दुर्भिक्षं =दारिद्रता मरोः सखा।

प्रकम्पनः—(भ्रष्टताललयं गायन् नृत्यंश्च)

(धिं धिमिद्धिमि धिं धिमिद्धिमि धिं धिमिद्धिमि धैं ।)

मरीचिका— पूय शोणित पूतिगन्धि नितान्तमस्तु जगत्रयम् ।

प्रकम्पनः — (तदेव तठन् नृत्यति)

मरीचिका— (क्वचित् क्वचित् पादविन्यसनतालादीनां च्युतेराकृष्टा वत्सं तर्जयन्ती)

गलितदशनमुखशतमथ खलतिवलितजर्जरम् ।

प्रकम्पनः— तदेव पठन् नृत्यति)

द्वावपि — धिंधिमिद्धिमि...,..............धैं ।

(नेपथ्ये) अहो! सर्वमपि दग्धं विदग्धम् ।

मरुः— (कर्णं दत्वा) अये कस्यायं स्वरविशेषः । दुर्भिक्षमिवायाति ।

(नेपथ्ये) अहो, सर्वमपि नष्टं प्रणष्टम् ।

महारोगः— अस्मदनुकूलमिव निवेदनम् ।

प्रकम्पनः—(प्रविश्य) तात मातुलो दुर्भिक्षमितोमुखमेवायाति ।

मरुः—आयातु वत्स आयातु । आशास्महे तस्मै पूर्णविजयम् ।

(उपसृत्य दुर्भिक्षं दृष्ट्वा) अहो नु खलु भोः; दर्शनीयैवास्याकृतिः ।

यतः,

20 जीर्णैः शीर्णविवर्णवस्त्रशकलैराच्छादिता नग्नता
उन्नम्रास्थिनि गण्डके परिगतास्ते केशकूर्चाः खराः ।
स्वेदासारकपूतिगन्धि च वपुः क्षोणं च साकल्यतो
भो दुर्भिक्ष परं व्यनक्ति विजयोदन्तांस्तवैवाकृतिः ।।

---

पद्यम्—20 सारः—दुर्भिक्षमभिसंबोध्य मरुर्वक्ति । हे दुर्भिक्ष, तवाकृतिरेव विजयवार्तां स्पष्टीकरोति । कथमित्युदाहरति—दुर्भिक्षस्य नग्नता जीर्णैः शीर्णैर्विवर्णैश्च वस्त्रखण्डैः आवृता वर्तते । गण्डयोः द्वे अस्थिनी उन्नते दृश्येते । तादृशयोः गण्डस्थलयोः परुषाः जटिलाश्च केशाः प्रसृता दृश्यन्ते । स्वेदप्रवाहेण क्षोणमार्द्रं च शरीरं दुर्गन्धं वमति । अतः हे दुर्भिक्ष, तव आकृतिरेव विजयवार्तां स्पष्टीकरोति ।

दुर्भिक्षम्-(उपसृत्य हस्तौ प्रसार्य) विजितम् ।
मरुः-किं नाम विजितम् ?
दुर्भिक्षम्-फलितम् प्रभो फलितम् ।
**मरुः-किं नाम फलितम्, भण । किं ते शीर्षपिण्डम् ?**
दुर्भिक्षम्-श्रूयताम् । अहमितो गत्वा मध्येमार्गं हत्यामाकारितवान् । सा तु सहसैव,

21 विसारि रसनारुण क्रकच दारुणा, दंष्ट्रिका-
परस्पर विघर्षण स्फुरित तीव्र दावानला ।
कराञ्चल विघट्टनैः स्तनितमुग्रमातन्वती
विशंकट कलेबरा धृतरसाऽभ्ययान्निर्भया ॥

मरुः-अहो नु खलु भोः ! निपुणः स्वल्वसि । ततस्ततः ।
दुर्भिक्षम्-ततस्तया सह गतवता प्रतिजनपदं मया विक्रीडितम् । यो मयाऽर्धप्राणीकृतः स तया गतप्राणीकृतः । केचन हताः । केचन सपरिवारं पलायिताश्च । किं बहुना ।

---

शीर्ण=जर्जर । उन्नम्र=उन्नत । गण्डके=कपोले । परिगताः=व्याप्ताः । कूर्चः=जटा । खरा=परुषाः । आसारकः=प्रवाहः । वपुः=गात्रं । साकल्यतः=सर्वतः । व्यनक्ति=व्यक्तीकरोति । विजयोदन्तान्+तव+एव+आकृतिः । प्रसार्य=वितत्य । stretching. आकारितवान्=आहूतवान्, आह्वानं कृतवान्, शब्दापयामास ।

पद्यम्—21 सारः—भयङ्कराकारिणी सा हत्या मम समीपमागतवती इति संक्षेपः । कथम्? बहिःप्रसृतया क्रकचसदृश्या रक्तवर्णया जिह्वया अतिभीषणा, दंष्ट्रयोः परस्परघर्षणेन दावानलमुद्दीपयन्ती करतलयोः संघट्टनेन कठोरं मेघनिर्घोषमुत्पादयन्ती उग्रस्वरूपिणी सा हत्या निर्भया सती मां सरसमभ्यागच्छत् ।

विसारिरसना=विशालजिह्वा । क्रकच=saw. दारुणा=भीषणा । दंष्ट्रिकयोः परस्परविघर्षणेन स्फुरितः तीव्रदावानलः यया सा । दावानलः=

22 प्रायो निर्वसनीकृताखिलजनाः निर्दग्ध केदारकाः
अन्नालाभ रुजार्तनाद विकलप्राणोत्तपद्दारकाः ।
निष्प्राणीकृत गोव्रजा निरुदकप्रोच्छुष्क कूपान्तराः
वन्ध्यीभूत विनष्ट सस्यविभवा ग्रामाः सरूपान्तराः ॥

मरुः—सखे सुष्ठु कृतं त्वयापि । सर्वसंहारकः सन् चिरं जीव । सर्वतोमुखविजया वयं प्रवर्धामहे । तथापि सर्वे सावधानाः भवन्तु । भारतवर्षमिमं समृद्धं कर्तुम् यतमानाः केचनात्र सन्दृश्यन्ते । अस्ति कश्चिद् हिमालयो यः खलु महौषधिभिर्महारोगं उच्चाटयन् वर्तते । तस्यास्ति काचिद् दुहिता गङ्गा नाम या जलसंभरणादिभिः मत्पदाक्रमणायोत्सहते । एवं तस्य कनिष्ठाश्च वर्तन्ते, विन्ध्यसह्यादयः । तेषां च सन्ति दुहितरः गोदावर्यादयः । सर्वेऽपि ते अस्मदुन्मूलने रन्ध्रान्वेषिणो वर्तन्ते । यद्यस्माकम् योजनासु किञ्चनापि स्खलितं, तर्हि पुनरस्मद्गन्धोपि नावशिष्टः स्यात् । ततः सखायः सावधानाः भवन्तु ।

---

वन्यवह्निः । स्तनितं =मेघगर्जनं । उग्रं =कठिनं । आतन्वती = तन्वाना उत्पादयन्ती । विशङ्कटकलेबरा= भीषणगात्री । धृतरसा + अभय यात् + निर्भया । अभि+अ+या+त् । पलायिता =धाविता । किं बहुना= बहुना वर्णनेन किं प्रयोजनं, अतः संक्षिप्य कथ्यते इत्याशयः ।

पद्यम्—22 सारः—मम हत्यायाश्च साहसिकविनोदेन सर्वेऽपि ग्रामा रूपान्तरं प्राप्ताः । कथमेतत् संभूतम्? ग्रामेषु प्रायशः सर्वेऽपि जना वस्त्ररहिताः कृताः । क्षेत्राणि भस्मीकृतानि । सर्वत्र शिशवः अन्नं अलब्ध्वा सञ्जातया, रुजया सार्तनादं क्रन्दित्वा विवशाश्च वर्तन्ते । गोव्रजाः प्राणरहिताः कृताः । कूपा जलशून्याः शुष्काश्च कृताः । सस्यसम्पदो विफलाः विनष्टाश्च जाताः । एवंरीत्या पूर्वं सम्पन्नाः समृद्धाश्च ग्रामा अधुना रूपान्तरं गता दृश्यन्ते ।

निर्वसनीकृताः अखिलजनाः येषु ते (ग्रामाः) । एवं (अन्यत्रापि बहुव्रीहि समासः । निर्वसनः= वस्त्ररहितः । केदारः=क्षेत्रं । अन्न अलाभ रुजा आर्तनाद विकलप्राण उत्तपद् दारकाः । रुजा =दुःखं । दारकाः= शिशवः ।

23 यस्मिन् रुजो नरगणान् परिमथ्नतेऽथ
वात्या च यं भ्रमगतो विषमीकरोति ।
कालानलो दहति यं कटुयातनाभि-
राक्रंस्यते स विषयो मरुणा तदैव ॥

(पुत्रमालिङ्ग्य) वत्स प्रकम्पन, त्वं गच्छ। वृष्ट्या दावानलेन् च सह प्रतिजनपदमटन् पितुस्साम्राज्यं विशालं कुरु । महारोग ! त्वमपि दुर्भिक्ष-द्वितीयो भूत्वा स्वकृत्यमविलुप्तं कुरु। अयि, प्रेयसि मरीचिके, त्वं सर्वेषामपि भ्रान्तिमापादयन्ती मदुपान्त एव वर्तस्व ।

---

गोव्रजः=गोकुलं । निरुदक=निर्जल । प्र+उद्+शुष्क=प्रोच्छुष्क । वन्ध्यीभूत=विफलीभूत । सरूपान्तराः=रूपान्तरं प्राप्ताः । समासे पूर्व-पूर्वपदानां प्रत्ययाः तथा अन्तरान्तरा पदानि च लुप्यन्ते इत्यस्य अत्रत्यानि समस्तपदान्युदाहरणानि भवन्ति । यथा-अन्नस्य अलाभेन जातया रुजया संभूतेन अर्तनादेन विकलप्राणा उत्पन्नाः च दारकाः येषु ते=अन्नालाभ.... दारकाः । अत्र जात संभूत इत्यादि पदानि समस्तदशायां न दृश्यन्ते । रन्ध्रान्वे-षिण=अवकाशं मार्गयमाणाः । स्खलितं=प्रमादः ।

पद्यम्—23 सारः—यत्र यत्र प्रदेशे अस्माकं जनाः पदं कुर्वन्ति तत्र तत्र ममापि सान्निध्यं नियतमेव स्यात् इति मरुः प्रतिज्ञां करोति । मरुणा स प्रदेशः आक्रंस्यते । कीदृशः प्रदेशः ? तद् विव्रियते । यस्मिन् प्रदेशे रोगाः नरगणानां मथनं कुर्वते, चण्डवातः भ्रमणं कृत्वा यं प्रदेशं सङ्कुलं करोति, प्रलयाग्निसदृशः चण्डातपो यं प्रदेशं कठिनयातनाभिर्दहति स प्रदेशो मरुणा आक्रंस्यते ।

रुजः=रोगाः । रुक् रुजौ रुजः । रुज् दिश् तृष् इत्यादयो हलन्तशब्दाः आकारान्ता अपि प्रयुज्यन्ते । रुक्=रुजा, दिश्-दिक्षु=दिशासु । तृट्- तृषा= तृषया । निट्-निशि= निशायां । विषयः= देशः । अविलुप्त=लोपरहित, अविकलं । मदुपान्ते= मत्समीपे । अटन्=सञ्चरन् । आपादयन्ती= जनयन्ती ।

24 विदूरगान् साधु विलोभयन्ती
वितन्वती स्वाभिमुखान् हताशान् ।
अनन्तदिङ्मार्गविहारिणि त्व-
मनन्तरायं विजयस्व नित्यम् ॥

॥ यवनिका ॥

---

पद्यम् 24 सारः—मरुः स्वपत्न्याः मरीचिकाया विजयम् शंसते । हे आकाशमार्गविहारिणि मरीचिके त्वं विदूरे गच्छतो जनान् यथेच्छं विलोभय । स्वाभिमुखमागतान् जनान् निराशान् कुरु । एवं निर्विघ्नं निरन्तरं विजयस्व ।

विदूरे गच्छन्ति =विदूरगाः । हताशान् =निराशान् । अन्तरायः =विघ्नः ।

द्वितीयोऽङ्कः समाप्तः

---

॥ अभ्यासः ॥

1 अधोनिर्दिष्टानि अव्ययानि संयोज्य वाक्यानि रचयत ।

यथा—किन्तु । सीता परिशुद्धैवेति रामो जानीते । किन्तु लोकापवादभयं स गुरुतरमगणयत् ।

1) एवं 2) असकृत् 3) कच्चित् 4) तथापि 5) नाम ।

II अद्य पठितानां एकभारतपद्यानां अन्वयं लिखत ।

III एकभारतस्य द्वितीयमङ्कम् अनुवदत । )

IV पाठशालाया आगच्छन्तीनां मालिनी-राधिका-माधवीनां कमपि विषयमधिकृत्य परस्परसंवादं स्वभावनानुसारं लिखत ।

V तृतीय चतुर्थपाठानामावर्तनं (Revision) कृत्वा सर्वे विषया दृढीक्रियन्ताम् ।

---

# त्रयस्त्रिंशो दिवसः

(एकभारते तृतीयोऽङ्कः)

(यवनिकोत्क्षेपणे प्रविशति निपीतमद्यो मदमन्थर इतस्ततः प्रस्खलन् फेनपुञ्जमुद्गिरन् समुद्यतभुजः समुद्रः)

समुद्रः—(अविस्पष्टाक्षरम्) कुत्र सा गंगा। कुत्र सा गोदावरी। क्व गता सा पर्णाशा। न खलु तासां दास्याः पुत्रीणां मद्गता चिन्ता। ता न जानते अहं कीदृशः प्रभुरस्मीति। (किञ्चिद् विचिन्त्येव)। अरी गंगे,

25 मत्पेटिकासु रत्नानि विद्यन्ते विविधानि वै।
न दद्यामेकमपि ते यावत् त्वं न मरिष्यसि॥

(परिक्रम्य) अरी, पतिव्रतासु कुलटे, कुलटासु पतिव्रते, त्वं वक्रं गच्छसि कुटिलं च गच्छसि। किन्तु मां नायासि।

---

तृतीयोऽङ्कः

निपीतमद्यः=निपीतं मद्यं येन सः=मद्यं पीतवान्। मन्थरः=मन्दः प्रस्खलन्=अस्थिरपदविन्यासः staggering. फेन=forth. पुञ्जः=समूहः। उद्गिरन्=वमन्, spitting। समुद्यतः भुजः येन सः=ऊर्ध्वं उत्सारितबाहुः। दास्याः पुत्री=पित्रा विना जाता स्त्री। जारजा। इदमतिनिकृष्टं पदं नाटकादिषु नीचपात्राणि भाषन्ते। मद्गता=मां विषयीकृत्य।

पद्यम्—25 सारः—समुद्रो मद्यपानां स्वभावेन भाषया च निरर्थकं प्रलपति; स्वपत्नीः प्रलोभयति च। मत्पेटिकासु अर्थात् मदन्तर्भागे विविधानि रत्नानि विद्यन्ते। यावत् त्वं न मरिष्यसि तावत् तेष्वेकमपि ते न दद्याम्। तव मरणानन्तरमेव दास्यन्ते इति भावः। मां नायासि=मां न उपागच्छसि। न+आयासि।

26 विकचकुचे घनजघने सितसिकते चञ्चलालकाञ्चलिके ।
गङ्गे भङ्गासङ्गे चपले विमले क्व वाऽसि तनुतरले ।

(उच्चैः) अरी उलूककोकिलकलालापिनि, त्वं किमित्येवं दर्पं करोषि ? अस्ति किं ते तावान् जलविभवो यावान् ममास्ति ? तव तु जलमंगुलीपरिमाणान् मत्स्यान् वहति । मम तु द्वीपपरिमाणान् । (किञ्चित् स्मृत्वेव) आह्, कीदृशः स मत्स्योपदंशः !,

27 मन्दाग्निना युवतिभिर्मृदु पाचितः स
खण्डः परं मरिच धूलि विरूषितश्च ।
आलोडितश्च लशुनादिभिरुग्रगन्धैः
लालां प्रवाहयति वक्त्रगुहान्तरान्मे ॥

(त्फू त्फू इति निष्ठीवति) पुनरपि स्मृत्वेव किं कथयसि, मया मद्यं पीतमिति । तर्हि त्वं मम बाह्वोरालिंगनायासिनी भूत्वा मामधिक्षिपसि । अथवा नायमधिक्षेपः । मम योग्यताप्रमापिणी वाणी । तथाहि—

---

पद्यम् 26—सारः— सुमुद्रः गङ्गामभिसंबोध्य कथयति । मम प्राणनाथे गंगे त्वं कुत्र वा वर्तसे । सम्यग् विकसितस्तने, गुरुतरजघने, सिकताभिः स्मितं कुर्वाणे, वीचिकाभिः अलकानलङ्कुर्वति तरंगैः भ्रूभंगं रचयन्ति तरलशरीरिणि चपले विमले त्वं कुत्रासि ।

विकच =विकसित. जघनः= नितम्बप्रान्तभागः । सिकता= sand. अलकः= चूर्णकुन्तलः curls. भंगः =तरंगः । उलूकः= पक्षिविशेषः, oul. कोकिलः =पिकः । उलूक इव पिक इव च मधुरमालपन्ति । दर्पः =गर्वः । अंगुलीपरिमाणान्= अंगुलीप्रमाणान् । मत्स्योपदंशः =मत्स्येन विरचितं व्यञ्जनं । Fish curry.

पद्यम्—27 सारः—तस्य मत्स्योपदंशस्य केवलं स्मरणमेव मम वक्त्रे जलं प्रस्रावयतीति संक्षेपः । स मत्स्यखंडः वक्त्रकुहरात् लालां प्रवाहयति । कीदृशः खंडः? युवतिभिर्मन्दाग्निना अतिमार्दवेन सम्यक् पाचितः, मरिचकचूर्णैः सम्यग् मेलितः उग्रगन्धैः लशुनादिभिः संयुक्तः स मत्स्यखंडः मम मुखगुहान्तरे प्रभूतं जलं उत्स्रावयति ।

28 हन्त ! सुधांशौ राजत-
कलशाद् विकिरति सुरां सुधाधवलाम् ।
भुवनेऽत्र को मनस्वी
न खलु पिबेत्, न स्खलेत् न वा जल्पेत् ?

अरी, गंगे कृष्णे, सिप्रे, अहं पुनः पुनराकारयामि । न खलु यूय शृणुथ । (किञ्चित् स्मृत्वेव) अहो अन्यत् सर्वमपि स्मृतेरन्तर्हितम् । तदेकमेव मद्यसारे फेनपुञ्ज इव उद्गीर्णम् । यूयमिदानीं देशसेवां कुर्वत्यः स्वच्छन्दं पर्यटथ । तर्ह्यटत । सर्वतोऽप्यटत । वयमधुना तदर्थमनुजानीमः । अयि प्रेयसि गंगे, त्वमेवाग्रेसरा भव ।

29 अट निकटं स्फुटविकटं पृथुलघटे संकटे जटे जरठे
चल चपलं छलतरलं मधुरजले चञ्चले कले सरले ।
(इति निरर्थकं जल्पन् प्रस्खलन् निष्क्रामति)
(ततः प्रविशति गंगा)

---

विरूषितः=मिश्रितः । आलोडितः=संपृक्तः । लशुनः=garlic. लाला=स्वादिष्ठानां भोज्यानां दर्शनेन वक्त्रान्तरात् प्रस्रवत् जलम् । निष्ठीवति=spits. आलिंगनायासिनी=आलिंगनसुखमनुभवन्ती । योग्यताप्रमापिणी=योग्यताया मानदण्डः अर्थात् सूचिका । मद्यपानं मम योग्यतामापकमित्यर्थः ।

पद्यम्—28 सारः—अस्मिन् समये ये न पिबन्ति ते मूढा एव । चन्द्रोदये सर्वेऽपि पिबेयुः, प्रस्खलेयुः, जल्पेयुश्च । अत्रोदाहरति । चन्द्रः एव स्वकीयात् राजत चषकात् सुधाशुभ्रं मद्यं विकिरति । एवं स्थिते अस्मिन् लोके को नाम न पिबेत् न स्खलेत् न वा जल्पेत्? सर्वेऽपि पिबेयुः प्रस्खलेयुः जल्पेयुश्चेत्यर्थः । सुधांशुः=चन्द्रः । सुधांशौ सुरां विकरति=सप्तम्याः विशेषप्रयोगः । यदा सुधांशुः सुरां विकिरति तदा । विकिरति (त. पु. स. ए.) अत्र=अस्मिन् । मनस्वी (न पु प्र ए)=धीरः । प्रस्खलेत्=भ्रष्टपदन्यासं चरेत् । जल्पेत्=निरर्थकं प्रलपेत् । आकारयामि=शब्दापयामि । शृणुथ=आकर्णयथ । अन्तर्हितं=अप्रत्यक्षीभूतं । उद्गीर्णम्=उद्गतं, बहिर्गतं । स्वच्छन्दं=यथेष्टं । तर्हि+अटत । अनुजानीमः=अनुज्ञां दद्मः । अग्रेसरः=प्रमुखः । नेत्री=मार्गनिर्देशिका । नेतृ+ई ।

पद्यम्—29 सारः—समुद्रः गंगाया यथेष्टसञ्चारार्थम् अनुज्ञां ददाति इति धारणया किमपि जल्पति । अस्य पद्यस्य न कोऽपि विशेषार्थः । अट=

गङ्गा—आर्यपुत्र, क्व गतो भवान् ? किं मामाकारितवान् ? अहमधुना विसृष्टनिखिलकृत्या भवत्सविधमुपगतास्मि । आज्ञापयतु किं करणीयमिति । (परिक्रम्य) हन्त ! अत्रापि न दृश्यते । अलब्धार्थो गतः स्यात् ? किमहं करवाणि? । मया यदाचरितम् तत् तत्रभवते न रोचते । यन्मया प्रियमिति कृतं तत् प्रतिकूलम् फलति । यदाऽहं तत्रभवन्तमुपसरामि तदा स मदभिमुखं निष्ठीवति, दोर्दण्डमुद्यम्याहन्ति कर्णकठोरं गर्जति च । किं मयात्र करणीयम् । हन्त मत्पितुर्दौर्भाग्यम् । द्वे अपि दुहितरावस्य दुःखायैव । यतः,

30 व्यथां ज्येष्ठा सिन्धुर्जनयति तुरुष्कैरपहृता
कनिष्ठा त्वाश्लिष्टा सततचपलेनांबुनिधिना ।
तदप्यन्याक्रान्तेर्भरतवसुधा रक्षणविधौ
धुरीणो जागर्ति प्रसृमर विशालोन्नततनुः ॥

अपिच,

---

सञ्चर । विसृष्टनिखिलकृत्या=निखिलकर्तव्यानि परित्यज्य । सविधं=समीपं । परिक्रम्य=इतस्ततश्चरित्वा । अलब्धार्थः=प्रयोजनमलब्धवान् । करवाणि=कुर्यां, तनवानि (लोट्. पर. उ. ए) । उपसरामि=उपगच्छामि । दोर्दण्डम्=करदण्डम् । उद्यम्य=उन्नमय्य, ऊर्ध्वम् प्रसार्य । आहन्ति=प्रहरति । दुहितरौ अस्य दुःखाय एव । 'दोस्' सकारान्तो हस्तपर्यायः । दोः दोषौ दोषः । दोषं दोषौ दोषः or दोष्णः । दोषा or दोष्णा दोर्भ्यां दोर्भिः । दोषे, दोष्णः etc. अर्थात् स्वरप्रत्ययप्रयोगे दोस् इतिशब्दः विकल्पेन दोषन् इति नकारान्तश्च जायते ।

पद्यम्—30 सारः—स्वपुत्र्योः सिन्धुगंगयोरसुभगजीविते परितप्तोऽपि पिता हिमालयः लोकोपकारायैव प्रवर्तते इति संक्षेपः । तुरुष्कैरपहृता ज्येष्ठा सिन्धुः पितुर्व्यथां जनयति । कनिष्ठा गंगा तु सततचपलेन अम्बुनिधिना आश्लिष्टा च । तथापि पिता हिमालयः अन्येषां आक्रमणात् भारतभूमेः संरक्षणविषये धुरन्धरो भूत्वा विशालां उन्नतां च तनुं प्रसार्य सदा जागरूको वर्तते ।

31 अवन्ध्यो विन्ध्योऽसौ जनपदशतानामवनतः,
प्रकृष्टां सह्योऽसौ कलयति च सेवामवनतः ।
कनिष्ठानामग्र्यौ मम पितुरभिन्नोज्ज्वलगुणौ
परं तौ कुर्वन्तौ सुलभविभवां भारतधराम् ॥

हन्त ! अहमीदृशी मन्दभाग्या संवृत्ता ! (इति रोदिति)

(ततः प्रविशति हिमालयः)

हिमालयः (गङ्गां दृष्ट्वा) वत्से किमेवमेकाकिनी भूत्वा किमपि प्रलपन्ती विलपन्ती च तिष्ठसि ? किं ते कदननिमित्तम् ।

गङ्गा—(उपसृत्य) तात वन्दे । मम तु,

---

तुरुष्कैः =माहम्मदैः । व्यथा=दुःखं । अंबुनिधिः =समुद्रः । आश्लिष्टा =संबद्धा । तदपि =तथापि । आक्रान्तेः (इ. स्त्री. प. ए.) = आक्रमणात् । धुरीणः =भारवाही, धुरन्धरः । प्रसृता विशाला उन्नता च तनुः यस्य सः । जागर्ति =जागरूको वर्तते । अपि च =न केवलमेतत्, किन्तु अन्यदप्यस्तीत्यर्थः ।

पद्यम् 31—सारः—हिमवतः कनिष्ठौ विन्ध्यः सह्यश्च यथाशक्ति भारतस्य सेवां तन्वाते । तथाहि, अयं विन्ध्यपर्वतः ग्रामशतानां रक्षणात् सफलः कृतकृत्यश्च वर्तते । असौ अवनतः अर्थात् विनीतः सह्योपि प्रकृष्टां सेवां करोति । मम पितुः समानगुणौ कनिष्ठेषु प्रमुखौ तौ द्वावपि पर्वतौ इमां भारतभूमिं विभवसमृद्धां कुर्वन्तौ साभिमानं वर्तेते ।

अवन्ध्यः =सफलः, सप्रयोजनः । जनपदशतानां+अवनतः = अवनात्, रक्षणात् । कलयति =कुरुते । सेवां+अवनतः =नम्रः । आद्यपादे अवन+तः इति तसिलन्तमव्ययम् । द्वितीये तु अव+नम्+त इति क्तान्तः शब्दः । 'तसिल्' प्रत्यये "तस्" शिष्यते । स प्रत्ययः प्रायशः पञ्चमीविभक्तेः स्थाने प्रयुज्यते । वृक्ष+तस्=वृक्षतः । वृक्षतः =वृक्षात् वृक्षाभ्यां अथवा वृक्षेभ्यः । राजतः =राज्ञः राजभ्यां अथवा राजभ्यः । अग्र्यौ=मुख्यौ । अभिन्नाः उज्ज्वलाश्च गुणा ययोस्तौ । कदनं=दुःखं ।

32 कदनं खलु शाश्वतः प्रवाहः सिकता हर्ष इवान्तरान्तरा तम् ।
गहने विपिने निराश्रयाहं रुदती हन्त ! नये दिनं कथञ्चित् ॥

हिमालयः— वत्से, शान्ता भव । न खलु देशसेविकानामिदं कातर्यमुचितम् । मोदाः खेदाश्च ता न विकुर्वन्ति । सर्वदैव ताभिः परार्पितसर्वस्वाभिर्भवितव्यम् । तासां तु सरणिः संकटा, प्रायशो मनोरथाश्च विकला भवन्ति । तथापि ता अविचलितचित्तवृत्तय एव दृश्यन्ते । त्वमधुना कदनाभिभूता दृश्यसे । कुतस्ते तादृशी धैर्याभिघातिनी व्याकुलता जाता । कथय विस्रब्धम् ।

गङ्गा—तात, अद्याहं वंगदेशावधीनां विषयाणां अनावृष्टिसंजातां तृष्णां निर्वापयितुं गता । सस्यान् केदारान् प्रसन्नान् कुर्वती सन्तप्तान् कृषीवलान् संतृप्तानातन्वती निर्जलान् जलाशयान् सुलभजलानाकलयन्ती प्रतिग्रामं प्रतिजनपदं पर्यटन्त्यासम् । तदा आर्यपुत्र आगत्य मामाकारितवान् । यदा तच्छ्रवणादितोमुखी न्यवर्ते तदा तत्रभवानितोऽपि विनिर्गतः । धिङ् मामसुलभसौभगां भर्तुरनुवर्तने । (रोदिति)

हिमालयः—(दुहितरं सान्त्वयन्) वत्से,

---

पद्यम्—32 सारः—गंगा स्वानुभवं प्रस्तौति । मम जीविते निरन्तरः शाश्वतश्च यः प्रवाहोऽस्ति स मम मनसि सर्वदा वर्तमानम् दुःखमेव । तत्प्रवाहमध्ये तत्र तत्र नैमित्तिका हर्षा इव काश्चन सिकताश्च दृश्येरन् । किन्तु मम शाश्वतरूपम् दुःखमेव । एवं दुःखात्मकप्रवाहरूपिण्यहम् अतिगहनेषु काननेषु निराश्रया भूत्वा विलपन्ती कथञ्चिदपि दिनानि नयामि ।

शाश्वतः = सनातनः, निरन्तरः । सिकता = नदीप्रवाहमध्ये तत्र तत्र विद्यमानाः अल्पतमाः द्वीपाः, small sandy lands. तमन्तरा = तस्य मध्ये । गहने = सान्द्रे । कातर्यम् = भीरुत्वं । विकुर्वन्ति = विकारकारणानि भवन्ति । ताभिः परार्पितजीविताभिः भवितव्यं = ताः परार्पित जीविताः भवेयुः । सरणिः = मार्गः । संकटा = विषमा । विकलाः = अपूर्णाः । अविचलिताः चित्तवृत्तयः यासां ताः । अभिभूताः = परिभूताः । धैर्याभिघातिनी = धैर्यनाशिनी । व्याकुलता = परवशता । विस्रब्धम् = सविश्वासं । विषयः = देशः । अनावृष्टिः = वर्षाभावः । निर्वापयितुम् =

33 सुमुखि रुदिहि मैवं बद्धवात्सल्यभावम्
जनकहृदयमेवं मा कृथा निष्प्रभावम् ।
प्रशमयितुमभूवं यः क्षमः शत्रुदावं
विसृजति स निकामं धीरमात्मस्वभावम् ॥

अथ च वत्से त्वया स्वपतिं प्रति नैवं संकोचः कार्यः । यत् सत्यं, स मे जामाता सदा प्रक्षुब्धः सततं चञ्चलश्च दृश्यते, तथापि तस्य तद् गाम्भीर्यम् अस्मद्राष्ट्रमन्यैरप्रधृष्यं करोति । अपि च पश्य वत्से, स कदापि नातिक्रान्तमर्यादो वर्तते । परिघसदृशान् बाहुदण्डानुन्नमयन् आकाशमुद्भेदयन्निव भ्रुकुटिगर्जन् अरिकुलं विभीषयन् सोऽस्माकं कर्मभूमेरंगरक्षको भूत्वा सेवामातनुते । त्वं तस्य बहिश्चाञ्चल्यमेव पश्यसि । नास्य गाम्भीर्यं महिमानं वा जानीषे । पश्य,

---

दूरीकर्तुं नाशयितुं । सन्नान्=क्षीणान् । आतन्वती=कुर्वती । पर्यटन्ती+भासम् । आकारितवान्=आहूतवान्, शब्दापितवान् । इतोमुखी=इदं स्थानमभिमुखीकृत्य । धिक्+मां । 'धिक्' इत्यव्ययं द्वितीयान्तेन सह निन्दार्थे प्रयुज्यते । धिङ् मां=अहं निन्दनीयः अथवा मम जीवितं निन्द्यम् । मातुः कृतघ्नं पुत्रं धिक्=मातुः कृतघ्नः पुत्रो निन्द्यः ।

पद्यम्—33 सारः—हे वत्से रोदनेनालम् । धीरमपि मां मैवमधीरं कुरु । न खलु त्वयैवं रोदनं कार्यं! यद्येवं रुद्यते तर्हि वात्सल्ययुक्तमिदं तव पितुश्चित्तं दुर्बलं स्यात् । योऽहं शत्रुरूपं दावानलमपि प्रशमयितुं शक्तोऽभूवं सेष तव पिता अधुना रुदतीं त्वां दृष्ट्वा स्वाभाविकमात्मनो धैर्यम् मुञ्चति ।

रुदिहि=विलप (लोट्. पर. म. ए.), क्रन्द । बद्धः वात्सल्यभावः यस्मिन् सः । कृथाः (लुङ्. आ. म. ए. ) मा इति निषेधार्थकमव्ययम् । एतद्योगे क्रियाया भूतकालसूचक अकारो लुप्यते । अतः अकृथाः इत्येतत् कृथाः इत्यवशिष्यते । अभूवं=अभवं । क्षमः=शक्तः; ।शत्रुदावः=शत्रुरूपो दावाग्निः । विसृजति=त्यजति । निकामम्=नितराम् ।

यत्सत्यं=सत्यमेव । जामाता=पुत्र्याः भर्ता । अस्मद्राष्ट्रम्+अन्यैः+अधृष्यं=अनाक्रमणीयम् । नातिक्रान्तमर्यादः=सीमानमनुल्लंघितवान् । मर्यादा=सीमा । परिघः=अर्गलः, · Iron beam used for shutting huge palace gate. जानीषे=जानासि । उद्भेदयन्=विदारयन् ।

34 द्वीपानामयुतं बिभर्ति यदयं नित्यंचलो निश्चलं
क्रय्याणां यदितस्ततः प्रणयनैर्लोकानयं सेवते ।
यज्जातोऽयमनुत्तमोन्नतकुले यस्मात् स्म सञ्जायते
शान्ताम्भोधिरपीह तच्छ्वशुरतामापाद्य तुष्याम्यहम् ॥

(नेपथ्ये गानं श्रूयते)

जन गण रमणी भारत धरणी जयति निरन्तर मङ्गल जननी ।
तव मन्द्रं जयवाद्य विशेषं प्रथयति जलनिधिरसदृशघोषम् ।
(जनगणरमणी........

---

पद्यम्—34 सारः—बहुविधा लोकसेवाः कुर्वतस्तस्य समुद्रस्य श्वशुरो भूत्वा अहं तुष्टोऽस्मीति संक्षेपः । सदा चञ्चलोऽसौ समुद्रः चलनरहितान् अनेकान् द्वीपान् वहति । क्रयविक्रयवस्तूनां इतस्ततः प्रेषणेन अयं लोकसेवां कुरुते । यस्मात् समुद्रवंशात् शान्तसमुद्रोऽपि जातः तस्मादेव वंशात् तव भर्ता वङ्गसमुद्रोऽपि समजायत । तादृशस्य परोपकर्तुः कुलीनस्य समुद्रस्य श्वशुरपदं प्राप्य अहं अतितरां तुष्यामि ।

अयुतम् =दशसहस्रं । बिभर्ति =धरति । यत् =यस्मात् । क्रय्याणां क्रयविक्रयवस्तूनाम् । प्रणयनैः प्रेषणैः= । यत्+जातः+अयं+अनुत्तम.... । अनुत्तम= अत्युत्कृष्ट । तस्य श्वशुरतां । तत्+श्वशुरतां =तच्छ्वशुरतां । आपाद्य= प्राप्य ।

गानम्—जनगणरमणी =जनानानन्दयन्ती । तव मन्द्रं......घोषम् = समुद्रः तव जयवार्तां तरंगरूपं वाद्यमाहत्य प्रख्यापयति । प्रथयति = विस्तारयति । च+आयातः+इव । कुसुमैः......कलितैः । वृक्षसमूहः सुगन्धिभिः मधुसङ्कुलितैः पुष्पैः भारतमातरमर्चति । अविरल=अनल्प । द्वीपम्......वितानम्= यस्याः असदृशं सुमहितं विस्तृतं च धर्ममहत्त्वं प्रतिद्वीपं प्राप । अयात् = ययौ । मानुष......दक्षान् =या भारतमाता अपत्यान् सर्वान् मानुषसमूहान् सम्यक् शिक्षितान् कृत्वा तत्तत्कर्मसु समर्थान् अकरोत् । अविकला (पूर्णा) शिक्षा येषां ते । अकृत= अकरोत् । अकृषातां अकृषत (लुङ् आ) समान्= सर्वान् । दक्षान्= समर्थान् । विगलित जनगणमानसदोषा= जनगणमानसदोषान् दूरीकृतवती ।

(गङ्गा—कर्णम् दत्त्वा) सिप्रा पर्णाशा चायात इव ।

(पुनरपि नेपथ्ये)

कुसुमैरविरल परिमल मिलितैस्तरुततिरर्चति नव मधु कलितैः ।
द्वीपं द्वीपमयादसमानं यस्यास्सुमहितधर्मवितानम् ।

(जनगणरमणी.........)

[सिप्रा पर्णाशा च गायन्त्यौ प्रविशतः]

मानुष लक्षानविकलशिक्षानकृत समान् या कर्मसु दक्षान्
सा राजति भुवनैकविभूषा विदलित जन गण मानस दोषा ।

[जनगणरमणी......]

हिमालयः—अहो श्रवणसुखं गानम् । श्रुत्वा सर्वमपि विस्मर्यते । अयं खलु गानस्य प्रभावः ।

35 व्यावर्तितेन्द्रियगणं विषयान्तरेभ्य-
श्चित्तं करोत्यविरतात्मसुखानुविद्धम् ।
निद्राति यद्विकसति प्रविलीयतेऽथ
विभ्राजते विहसति क्षणमन्तरेण ॥

पर्णाशा—[हिमालयं निरीक्ष्य सादरमात्मगतम्]

36 बाह्यैः शुभांगैरवदातभावं तथान्तरंगेण गभीरभावम् ।
व्यनक्ति यद्यप्ययमप्रधृष्योऽप्याभाति सर्वैस्सततामिगम्यः ॥

---

पद्यम्—35 सारः— गानं अलौकिकेनानन्देन चित्तं मोहयति । तद् जनानां इन्द्रियाणि अन्यविषयेभ्यो व्यावर्त्य चित्तं सन्ततपरमानन्दनिलीनं करोति । तत्तादृशं चित्तं गानश्रवणसमये कदाचिद् निद्रातीव, कदाचिद् विकासं प्राप्नोतीव, कदाचिद् विलयं प्राप्नोतीव, उज्ज्वलतीव, विहसतीव च । गानश्रवणेन चित्तमीदृशं विकुरुते । व्यावर्तिताः इन्द्रियगणाः येभ्यः तद् [चित्तं] । व्यावर्तित = परावर्तित । विषयः = इन्द्रियैर्गृह्यमाणं वस्तु । नेत्रस्य विषयः वृक्षगजादयः, श्रोत्रस्य विषयः शब्दः, रसनाया रसः इत्येवम् । विषयान्तराणि = अन्ये विषयाः । अविरतेन आत्मसुखेनानुविद्धम् । अविरतम् = निरन्तरं । अनुविद्धं = सहितं, संबद्धम् ।

पद्यम्—36 सारः— पर्णाशा हिमालयम् निरीक्ष्य प्रस्तौति । हिमालयस्य बाह्यावयवाः तस्य परिशुद्धस्वभावम् व्यञ्जयन्ति । तथा अन्तरंगेण गांभीर्यम्

सिप्रा—(गङ्गां निरीक्ष्य सकौतुकमात्मगतम्)

37 उपेयिवांसो द्रवतां प्रायो गुणगणाः पितुः ।
पुत्र्याः प्रवाहाः सञ्जाताः भुवनत्रयपावनाः ।।

(द्वे अभ्युपसृत्य) पितृदेव, वन्दावहे ।

हिमालयः-वत्से लोकप्रिये भवतम् । अन्यजीवनार्थायैव युवयोर्जीवनानि भवन्तु ।

पर्णाशा—शिरसा धार्यते सानुग्रहं वाक्यम् । फलितमावयोर्मनोरथैः ।

हिमालयः— अपि कुशलं युवयोर्विषयाणाम्?

पर्णाशा— तात अयमेक एवावयोः क्लेशहेतुः ।

हिमालयः—कथमिव?

पर्णाशा—कथमावयोर्विरलभागधेययोर्विषयेषु कुशलं भवति? यत्र स मरुर्मरीचिकाजालनिश्शास्ता वर्तते ।

---

च व्यनक्ति । तथैवायम् बाह्यदृष्ट्या अप्रधृष्यः अर्थात् अनभिगम्य इव प्रतिभाति । किन्तु स सर्वेषामप्यभिगम्यश्च वर्तते ।

अवदातभावम् =विशुद्धस्वभावम् । व्यनक्ति =स्पष्टीकरोति । यद्यपि अयं अप्रधृष्यः अपि आभाति =प्रतिभाति[seems]

पद्यम्—37 सारः—सिप्रा गङ्गाम् निरीक्ष्य स्वयं चिन्तयति । पितुर्हिमालयस्य गुणगणाः द्रवीभूय पुत्र्या गङ्गाया भुवनत्रयपावनाः प्रवाहा जाता इति मन्ये ।

उपेयिवांसः =प्राप्ताः । 'इ' धातोर्गमनमर्थः । एति समेत परीत विपरीत इत्वा व्यत्ययः प्रत्ययः अयनं एतु एहि इत्यादिष्वनेकेषु पदेषु 'इ' धातोः सान्निध्यमस्ति । उपेयिवस् इति शब्दः इ धातोः क्वसुप्रत्ययान्तः । उप+इ+वस्+अः =उपेयिवांसः । उपेयिवान् उपेयुषः उपेयुषां उपेयिवत्सु उपेयुषि इत्यदीनां प्रक्रियाः विद्वस् शब्दस्येव भवन्ति । ताः आवर्तनेन दृढीकुरुत । द्रवतां =द्रवत्वम् । पावनाः =पुनानाः, शुद्धीकुर्वत्यः ।

फलितमावयोर्मनोरथैः =आवयोर्मनोरथाः फलिताः । विषयाणम् = देशानाम् । व्यापादयितुं =नाशयितुं । मा मैवं= न संभाव्यं । अविकृतं=

हिमालयः—आः ! मरुर्युवयोर्विषयान् पुनरपि व्यापादयितुं उद्युक्तः ? मा मैवम्। असकृत् स मयोद्बोधितः 'अविकृतं वर्तस्वे' ति। न स मा ग यति? अस्तु, अहमधुनैव जामातरं सागरमामन्त्रयामि। स एवार्तानामेकावलम्बः। तद्युवामधुना स्वविषयमेव प्रतिनिवर्तताम। अपारागाधहृदयः स यावत्कालं वर्तते तावत् अस्माकं नास्ति कुतोऽपि भयस्यावकाशः। अहो, विचित्राणि तस्य वृत्तानि।

---

विकाररहितं यथातथं। एव+आर्तानां+एक.वलंबः। तद्+युवां। वृत्तं=चरितं।

पद्यम्—83सारः—सदा चञ्चलस्वभावोऽयमम्बुधिः अतिक्षुद्र इति जना मन्यन्ते। एवं जनानां भ्रान्तिं जनयितुमेव स सततं बहिश्चलो वर्तते। वस्तुतः जनानां एवं भ्रमुत्पादयन् स तानेव क्षुद्रान् करोति। समुद्रसदृशानां महतां स्वभावा एवमुच्चावचा भवन्ति। ते अन्यैरवगन्तुं न शक्याः। बहुविधास्ते परेषां विस्मयं च जनयति।

क्षुद्रः= अन्तस्सारशून्यः। अवबोध्य= प्रबोध्य संज्ञाप्य। बहिश्चलत्वात्= बाह्यचलनस्वभावेन। अप्रतिमं आत्मसत्त्वं यस्य सः। अप्रतिम=असदृश। सत्त्वं= शक्तिः। उच्चावचाः=विषमाः, क्रमरहिताः। विलक्षाः= असाधारणाः। दुःखेन अवगाहितुं योग्याः= दुरवगाहाः। अवगाहितुं=प्रवेष्टुं [ज्ञातुं]। दुर् सु इत्येतयोरुपसर्गयोर्योगे य, तव्य, अनीय इत्येषां स्थाने केवलं 'अ' इति प्रत्ययोऽपि प्रयुज्यते। सुखेन गन्तुं योग्यं अथवा शक्यं=सुगमम्। दुर्गमम्, सुसहं, दुस्सहं=दुःखेन सहनीयं। गन्तुं योग्यं (शक्यं) इत्यस्य गम्यं गमनीयं इत्येवार्थः। दुरवगाहतमाः=अत्यन्तमज्ञेयाः। अशुद्धत्रिकरणां= मनोवाक्कर्मसु अशुद्धाम्।

तृतीयोऽङ्कः

38 क्षुद्रं परान् स्वमवबोध्य बहिश्चलत्वात्
क्षुद्रान् परान् वितनुतेऽप्रतिमात्मसत्त्वः ।
उच्चावचा हि महतां विविधा विलक्षा
विस्मापका दुरवगाहतमाः स्वभावाः ॥

(हिमालयः पर्णाशा सिप्रा च निष्क्रामन्ति)

गङ्गा—(अञ्जलिं बध्वा) आर्यपुत्र ! क्षमस्व मां अशुद्धविकरणाम् । (सगद्गदं रोदिति) ।

(यवनिका)

---

॥ अभ्यासः ॥

I अद्य पठितं एकभारतभागं अनुवदत ।

II पदानि विश्लेष्य सन्धिकार्याणि विशदयत ।
1) कस्तेषां 2) सर्वेऽप्येकीभूताः 3) क्वासि 4) गत इति 5) आयातीव 6) मद्देष्वद्य 7) कुशलायैव 8) आज्ञाकरोऽस्ति 9) कर्णाटकेषूत्सृष्टाः 10) चावन्तिषु ।

III अन्त लिंगविभक्तिवचनानि लिखत । यथा-करिभिः—न पु तृ बहु ।
1) पत्नी 2) विदेशी 3) दीर्घदर्शी 4) कवी 5) वने 6) कन्ये 7) भवने 8) धनिने 9) दृश्यमानां 10) अधमानां ।

IV पदपरिचयं दत्त । यथा-विलिख्य, लिख् धातोः ल्यबन्तमव्ययम् । गतवान्—गमधातोः क्तवत्वन्तः पु प्र ए ।
1) विधाय 2) देवाय 3) हरेः 4) हरेः 5) हसत् 6) अहसत् 7) नीत्वा 8) त्वा 9) पिपासु 10) लतासु ।

V स्वां जीवितकथां द्वित्रासु खण्डिकासु संक्षिप्य लिखत ।

VI अद्य पठितात् एकभारतात् भवतां अभीष्टानां चतुर्णां पद्यानां अन्वयं लिखत ।

VII पञ्चम षष्ठपाठयोरावर्तनं कृत्वा पठितपूर्वान् विषयान् दृढीकुरुत ।

# चतुस्त्रिंशो दिवसः

## एकभारते चतुर्थोऽङ्कः

(ततः प्रविशति चिन्ताकुला गङ्गा)

गङ्गा—(आत्मगतम्) आर्यपुत्र ! प्रसीद मयि । यन्मयाऽपराद्धं, क्षमस्व । त्वय्यहमशुद्धत्रिकरणा जाता । मम त्वीदृशी दशा।

39 प्रालेय शैल शिखराद् गलिता, पयोधेः
प्राणप्रिया, परिहरामि तृषां जनानां ।
साऽहं दहामि नितरामधुनैक्यतृष्णा-
तीव्रोष्मणा महित भारत भूतधात्र्याः ॥

आर्यपुत्र, तव दासीं मामनुशाधि । तात, हिमालय, पुत्रीमनुगृहाण । अस्माकं अधिष्ठात्र्या एकतापादकं कञ्चन मार्गम् प्रदर्शय येनाहं एतां समृद्धां कर्तुम् शक्नुयाम् । एवमनवशिष्टकर्तव्यान्तरा च स्याम् । (परिक्रम्य विचिन्त्य च ।) कथमस्या आर्षभणितिभिरेकीकृतायाः गिरिजलधिभिरन्यतोऽसंपृक्तायाः अस्मत्कर्मभुव ईदृशमनैक्यं सञ्जातम्? यद्यपि विभिन्ना वर्णा विचित्रा धर्ममीमांसा विविधा भाषाश्च सन्ति तथापि ताः सर्वाः अप्यस्य एकस्मिन्न-निगमप्रमाणेऽधिष्ठिता वर्तन्ते । (पुनरपि परिक्रम्य विचिन्त्य च) इदं अनैक्यं न खलु चिरस्थायि । किन्तु क्षणिकमिति मे प्रतिभाति, यदन्नवस्त्रादीनां सुलभतया दूरीभवत्येव ।

---

चतुर्थोऽङ्कः

त्वयि अहं अशुद्धत्रिकरणा । तु ईदृशी ।

पद्यम्—39 सारः—हिमालयात् अहं प्रवहामि । जलधेः प्राणप्रिया अस्मि । जनानां तृष्णां अहं परिहरामि । तादृशी अहं भारतमातुः ऐक्य-तृष्णाया ऊष्मणा अधुना दहामि । इदं विचित्रमेव ।

प्रालेयशैलः=हिमवान् । तृषा=तृष्णा । नितरां अधुना ऐक्य...... । शैत्यात् जाता, शैत्येन संबद्धा, शैत्यं वितरन्ती चाहं ऊष्मणा दहामीति विचित्रमेवेत्यर्थः ।

[नेपथ्ये]

अपसरत सस्यश्यामलजडाः प्रदेशा अपसरत !
गङ्गा—[कर्णम् दत्त्वा] अहो मरोरिवायं निर्ह्लादघोरो निस्वनः।

[पुनरपि नेपथ्ये]

40 या मां क्लिन्नं चिकीर्षुः सरिदिह पयसामन्तकं स्वैः प्रवाहैः
यो वाऽब्दो मत्प्रियायाः सरसविलसितेष्वन्तरायं करोति।
यश्चास्मद्वत्सतीव्राहृति विहृति सहः पादपः पत्तनं वा
सोऽभ्यायातोऽग्रतो मे श्वसितरभसतो नेष्यते भस्मभूयम् ॥

गङ्गा—आहा! मरोरिदमनिष्टं दुःश्रवं निवेदनम्। आर्यपुत्र, मत्कृतं सर्वमपि क्षमस्व। देहि मे तादृशीं शक्तिं ययाऽहमेनमनिष्टमुत्सारयेयम्। हन्ताहमत्रैकाकिन्यस्मि। [सावेगं परिक्रम्य] अयि पर्णाशे एह्येहि, गोदावरि एह्येहि। वेत्रवति, सिप्रे, ब्रह्मपुत्रे एह्येहि। एष भीषणो मरुरत्र सर्वानाकुलयितुमुद्यतो वर्तते। वयं सर्वा अप्येकीकृत्यावन्तीभ्यस्साल्वेभ्य आनर्तभ्यश्च तमुन्मूलयितुं प्रयतामहै।

[नेपथ्ये] आर्ये इयमागतास्मि।

---

अनुशाधि=[शास् धातोः लोट् म ए] नियोजय, शासनं कुरु। अनुगृहाण [लोट् पर म ए] अनुगृहीतां कुरु। अधिष्ठात्री=आधारभूता। एकतापादकम्=ऐक्य सम्पादकम्। शक्नुयाम्=शक्ता भवेयम्। अनवशिष्टानि कर्तव्यान्तराणि यस्याः सा। तस्याः बहूनि कर्तव्यानि अतोऽप्यवशिष्टानि सन्तीत्यर्थः। आर्षभणितिभिः=ऋषिवचनैः। अन्यतोऽसम्पृक्तायाः= अन्यैः सह न संबद्धायाः। राष्ट्रमीमांसा=राष्ट्रचिन्तागतिः।

नेपथ्ये मरोः गर्जनं श्रूयते। जडाः=चैतन्यशून्याः। अपसरत= दूरं गच्छत। निर्ह्लादः=मेघ गर्जनं।

पद्यम्—40 सारः— मरुः सर्वमपि फलभूयिष्ठं प्रदेशं भस्मीकरिष्यतीति प्रतिजानीते। या नदी जलप्रवाहाणामन्तकं मां स्वैः प्रवाहैः जलार्द्रम् कर्तुमिच्छति तामहम् भस्मीकरिष्यामि। तथा यो नाम मेघः मत्पत्न्याः मरीचिकायाः सरसविलासेषु विघ्नकारी वर्तते सोऽपि मम श्वासोष्मणि भस्मीभविष्यति।

सिप्रा (प्रविश्य) आर्ये पश्य तावत्। तत्र स प्रकम्पनश्चक्रीभूतस्सन् संहारलीलामातनुते।

(नेपथ्ये) आर्ये इयमागतास्मि।

पर्णाशा—(प्रविश्य) आर्ये गङ्गे तत्र सुदूरं दृष्टिं विक्षिप। स परिभीषणो मरुः शरीरेणोष्माणमुद्गिरन् मरीचिकामुरसा परिलालयन् नेत्राण्यन्धीकुर्वन्निव दृश्यते। एहि वयमद्भ्यः प्रार्थयामः। (अञ्जलिं बद्ध्वा)

41 पारियात्रक ते पुत्र्यै पर्णाशायै सृजेरपः।
अभितस्त्वां समाक्रान्तान् मरूनुत्सारयै यतः।

सिप्रा—(अञ्जलिं बध्वा)

---

अथवा यो वा वृक्षो नगरं वा मद्वत्सस्य प्रकम्पनस्य स्वेच्छाविहारं सहमानो वर्तते सोऽपि मदभिमुखमायातु। मम श्वासवेगे स भस्मीभविष्यति।

क्लिन्नं=जलार्द्रम्। चिकीर्षुः=कर्तुमिच्छुः। सरित्=नदी। पयसां जलानां। अब्दः=मेघः। अन्तरायम्=विघ्नम्। यः अस्मद्वत्सस्य मात्राहृतिं विहृतिं च सहते सः। पादपः=वृक्षः। सः अभ्यायातः अग्रतः। रभसतः=वेगात्। भस्मभूयम्=भस्मतां। 'त्वं' 'ता' इति भावार्थ प्रत्यययोः स्थाने 'भूयं' अपि प्रयुज्यते। यथा— मर्त्यभूयम्=मर्त्यता, मर्त्यत्वं।

मरोः इदं अनिष्टम्। यथा अहं एनं अनिष्टम् उत्सारयेयं। हन्त अहं अत्र एकाकिनी अस्मि। सर्वान् आकुलयितुं उद्यतः। अपि एकीकृत्य अवन्तीभ्यः साल्वेभ्यः। शरीरेण ऊष्माणम् उद्गिरन्। नेत्राणि अन्धीकुर्वन् इव। अद्भ्यः= जलाय। अप्शब्दः जलपर्यायः। स बहुवचने एव प्रयुज्यते। यथा–आपः अपः अद्भिः अद्भ्यः अद्भ्यः अपां अप्सु। अत्र पकारस्य दकरपरिणामो विशेषः। पूर्वमिवं परामृष्टम्।

पद्यम्—41 सारः—पर्णाशा पारियात्रकपर्वतात् प्रवहति। सा स्वपितरं पारियात्रकं जलं प्रार्थयते। तेन जलेन तत्पर्वतपरिसरेषु व्याप्तान् मरुप्रदेशान् दूरीकरिष्ये इति प्रतिज्ञां करोति। त्वां अभितः= तव परिसरे।

42 तात, बिन्ध्य जलं देहि सिप्रा प्रार्थयते सुता ।
त्वं धत्से शिरसा नित्यं प्रलयाम्भोभृतां शतम् ॥

[सर्वा नद्यः नववर्षसीकरस्पर्शसुखात् पुलकिता भवन्ति]

[ततः प्रविशति क्रोधविस्फारिताक्षो मरुः]

मरुः—अहो नु खलु भोः! अरसरतापसरत । अयमस्माकं विहाररंगः । नो चेद् अस्माकमूष्मणि नियतयेव यूयं बाष्पीभविष्यथ (नृत्यति गर्जत्युत्प्लवते च) ।

गङ्गा—[धैर्यमवलम्ब्य] किं जल्पसे जालम? ।

मरुः—[प्रत्येकां निर्दिशन्] अहो नु खलु भोः! धिक् त्वां, धिक् तां धिगेताम् । अये एवं भणथ । [पश्चाद्विलोक्य] प्रिये मरीचिके, त्वत्सदृश्यः काश्चनात्रापि दृश्यन्ते । मामधिक्षिपन्ति च ।

43 त्वमिवैता नदन्त्युच्चैः चरन्ति च ललन्ति च ।
कचाः कुचास्त्वचश्चापि दृश्यन्ते तावका इव ॥

सिप्रा—[मरुं विलोक्य] अपसर दूरम् । अस्माभिः पुत्रीवन्त इति कथ्यते कुलपर्वताः । तादृशीनामस्माकं पुरतः अकुलीनं मा भण । अपसर दूरम् ।

---

पद्यम्—42 सारः—सिप्रा विन्ध्यात् प्रवहति । ततः सा स्वपितरं प्रार्थयते । स पर्वतः स्वशिरसा प्रलयमेघानां शतं धरति । तस्मात् प्रभूतं जलं दातुं स शक्त इत्यर्थः ।

सीकरः=जलकणः । पुलकित=रोमाञ्चित । क्रोधविस्फारिताक्षः= रोषविकासितनेत्रः । ऊष्मणि=तापे । उत्प्लवते=कूर्दते Jumps. जल्पसे= असंबद्धं प्रलपसि । जाल्म=दुष्ट Rogue. त्वत्सदृश्यः=त्वया सदृश्यः ।

पद्यम्—43 सारः—मरुः स्त्रीस्वरूपिणीः गङ्गादिनदीः दृष्ट्वा भयाश्चर्यादिभिराविष्टः मरिचिकां आहूय कथयति । अयि मरीचिके त्वमिव एताः शब्दं कुर्वन्ति तथा सर्वमपि त्वमिव कुर्वन्ति । त्वमिव एता अपि केशान् धरन्ति, कुचान् च धरन्ति । त्वचश्च तवैव दृश्यन्ते । कचः=केशः । कुचः=स्तनः । त्वचः चर्माणि (त्वक्) ।

मरुः—[ससम्भ्रमम् अहो नु खलु भोः। हन्त ! मरीचिके क्वासि प्रेयसि ! सङ्कटे देहि धैर्यम्। [विलोक्य] हन्त सा न दृश्यते। प्रेयसि मरीचिके ! सर्वचराचरप्रतारणनिपुणे, अधुना त्वं मां विसृज्य गतासि? [पुनरपि पश्चाद्विलोक्य] वत्स प्रकम्पन, एह्येहि ! अयं ते पितृसाहाय्यस्यावसरः। किं न शृणोषि मम आकारितम्? क्व गतस्त्वं वत्स? [किञ्चिद्विचिन्त्य] द्वावपि न मामाकारयन्तं शृणुथः। [धैर्यमवलम्ब्य आत्मगतम्] अथवाऽहं पुरुषो भूत्वा स्त्रीणां शिशूनां च साहाय्यं किमर्थमर्थये। [प्रकाशं] का यूयम्? कुतस्त्याः? कुतोऽत्रागमनम्। युष्माकं शीतलिमा प्रलयानलसमप्रतापं मां बाधते। न मेऽयं रोचते। अपसरतास्मद्विषयाद्।

गङ्गा—अयमस्मद्विषयः। त्वमितोऽपसर। नातः परं भारतखण्डे ते स्थितिः स्यात्।

मरुः—किमधिक्षिपथ, उत भीषयथ? तर्ह्यस्मिन् मदूष्मणि यूयं भस्मीभविष्यथ। [इत्यूष्माणं विसृजति। नद्यः युगपदेव मरुमद्भिरासिञ्चन्ति। किन्तु जलं सर्वमपि मरोरूष्मणि वाष्पीभवति।]

मरुः—[गर्जन्] अहमखिललोकभस्मीकरणचणो मरुमहाराजः। नैतद्युष्माकं विदितम्। अतः परं विदितं स्यात्। [गर्जन् नदीः उपसरति]

नद्यः—(ऊष्माणमसहमानाः) हा भूतधात्रि ! हा तात !

गङ्गा—हा नाथ, हा तात।

(सर्वा मूर्छन्ति)

(उच्चैस्तरं गर्जन् उद्बाहुः इतस्ततः प्रस्खलन् समुद्रः प्रविशति। मरुर्भयाकुलो भूत्वा मन्दमन्दमपक्रामति)

समुद्रः—(मूर्छितां गङ्गां विलोक्य) हन्त किमेतत्संवृत्तम्? प्रिये, कस्ते मूर्छाहेतुः। अयमस्मि ते परिक्लेशबन्धुः। (परितो विलोक्य) हन्त सिप्रे, गोदावरि, किमत्र संवृत्तम्। (तिस्रोऽपि कराञ्चलेन स्पृष्ट्वा मुखानि निरीक्ष्य च) हा हा मूर्छिता यूयम्। को युष्माकं मूर्छनाहेतुः? प्रकृतिशीतला एताः ऊष्माभिहता इव लक्ष्यन्ते। (शीतलोपचारैः संवाहनादिभिरपि लब्धसंज्ञाः करोति।)

समुद्रः—(आत्मगतम्) हन्त ! विचित्रं खलु नदीनां चरितं। यतः

---

अस्माभिः......पर्वताः =वयं कुलपर्वतानां पुत्र्यः। क्व असि। सकृत् + पि। विसृज्य =त्यक्त्वा। आकारितम् =आह्वानम्। द्वौ अपि। रोचते =

44 नीचैः प्रयान्ति परमोन्नतवंशजाताः
मालिन्यमाददति याः खलु नित्यशुद्धाः ।
सर्वत्र वक्रगतयोऽप्यृजुभावपूर्णाः
सृष्टिं भुवो विदधते प्रलयस्वरूपाः ॥

गङ्गा—[नयने उन्मील्य] अये आर्यपुत्रः ! । क्षमस्व मत्कृतानपराधान् ।

समुद्रः—[पाणिनाश्रु प्रमृज्य] प्रिये न त्वया किमप्यपराद्धम् ।

[सिप्रा पर्णाशा च नयने उन्मीलयतः]

सिप्रा—अये! आर्यपुत्र कथमेतत् [निरीक्ष्य] नन्वार्यपुत्र एव ।

पर्णाशा—अहो कथमयमार्यपुत्रः ।

समुद्रः—हां आर्यपुत्र एव । समाश्वसिहि । अथ को युष्माकं वैवश्यहेतुः? अयमस्मि सर्वेषां परिक्लेशबन्धुः । किमधुना युष्माकमीहितमस्ति ।

---

प्रियं भवति । युगपद् =एकस्मिन्नेव क्षणे । सह अद्भिः =जलेन । भस्मीकरणचणः =भस्मीकरणनिपुणः । 'चञ्चु' 'चण' इति प्रत्ययौ समर्थ इत्यर्थे समस्यते । भाषणचञ्चुः, भाषणचणः= भाषणे समर्थः ।

पद्यम्—44 सारः—समुद्रो नदीनां जीविते दृश्यमानं वैरूप्यं विवीकरोति । नद्यः पर्वतानां उन्नतकुले जाताः । तथापि ताः नीचैः प्रयान्ति । नित्यशुद्धाः ताः सर्वाण्यपि मालिन्यानि स्वीकुर्वन्ति । ताः सर्वत्र वक्रं गच्छन्ति तथापि तासां हृदयं आर्जवेन पूर्णम् । प्रलयस्वरूपाः ता एव विश्वस्य सृष्टिं विदधति च । अश्रु= बाष्पं ।

वक्रगतयः अपि ऋजु...... । भूः भूमिः । भुवः (ऊ स्त्री ष ए) जीवनं =जलं । कुत्र, असौ आसन्नमृत्युः =मरणान्तिकगतः । कुत्र, अपि, अत्र, एव । अन्तर्हितः =तिरोभूतः । यावदागच्छामि= आगमिष्यामि । रौति= शब्दं करोति ।

तित्र:—आर्यपुत्र, जीवनं देहि येन वयं मरुमुत्सारयेम।
समुद्रः—कुत्रासावासन्नमृत्युर्मरुः।
गङ्गा— कुत्राप्यत्रैव अन्तर्हितः स्यात्।
समुद्रः—क्षणमत्र तिष्ठत। अहं यावत् तं गृहीत्वा आगच्छामि।
(निष्क्रामति)

(नेपथ्ये)

हन्त सर्वमपि दग्धं विदग्धम्।
सिप्र—आर्ये, कस्यायमार्तनादः ! [पुनरपि नेपथ्ये]
सर्वमपि नष्टम्, विनष्टम्।

[आर्तनादं कृत्वा अग्रे धावन्तौ दुर्भिक्षमहारोगौ अनुसरन् फलमूलैः ओषधिभिश्चावृतशरीरो हिमालयः प्रविशति।]

दुर्भिक्षम्—हन्त सर्वमपि विष्टं प्रविष्टम्।
महारोगः—हन्त हताः स्मः।
हिमालय—धावतम्, धावतम्। इतः परमस्मत्कर्मभूमौ मा पदं कुरुतम्।
द्वौ—यथा भवानादिशति। न पदं करवाव, न पदं करवाव।
[मरुः—कण्ठे गृहीत्वा समुद्रः प्रविशति]
मरुः—मुञ्च मां देव, मुञ्च मां भाव। [इति दयनीयं रौति]
समुद्रः-अरे।

15 पिपासुस्त्वं पिपासुस्त्वं पिब तावज्जलं बहु।
गर्भिण्या इव ते कुक्षिरुद्गच्छतु यथासुखम्॥
[इति जलं पाययति। मरुः कम्पते, नेत्रं निस्फारयति च।]
[सर्वेपि विविधान् भावान् प्रकटय्य परस्परमवलोकयन्ति]

समुद्रः—[हिमालयस्यान्तिकं गत्वा] तात, वन्दे। अयं जलसंभारः स्वीक्रियतां। [नदीः प्रति] गंगे, सिप्रे, प र्शि, आयात। तत्रभवतः पितुः शिरसो जलसंभारमादाय मृदुलमृणालशीतलैः करैः मरुमासिञ्चत। [तिस्रोऽ-पि तथा कुर्वन्ति। मरुस्सहसैव सस्यश्यामलस्सुरभिलश्च संजायते]

---

पद्यम्—45सारः—समुद्रः मरुं गृहीत्वा वदति। यदि त्वं यातुमिच्छसि याहि। पातुमिच्छसि तर्हि पिब। तव कुक्षिः गर्भिण्याः कुक्षिरिव जृम्भतु,

मरुः—[प्रसन्नः बाष्पमुद्गिरन् सगद्गदः हिमालयमुपसृत्य पादयोः पतन्]

46 समं वसन् पापजनैरहर्निशम् ।
समापतं कुत्सितपापकर्मसु ।
ततस्समुत्तारयिता त्वमद्य मे ।
क्षमस्व मां पुत्रधिया शतागसम् ।।

हिमालयः—[मरुं हस्तेन गृहीत्वा] उत्तिष्ठ वत्स ।
मरुः—तात नियुङ्क्ष्व मामभिमतेषु कृत्येषु ।
हिमालयः—प्रभूतैरुत्पादितैरन्नैस्त्वं कर्मभूमेरस्याः सेवां कुरु । अस्याः ऐक्यं आपादयितुं अयमद्वितीयो मार्गः

मरुः—तातस्य प्रभावात्!
हिमा—वर्धस्व वत्स (इत्याशीर्वदति)

---

पद्यम् 46 सारः—मरुः पश्चात्तापविवशः सन् हिमालयं क्षमां प्रार्थयते । अहं पापजनैः सह अवसम् । अतः नीचेषु पापेषु च कर्मसु आसक्तश्चाभवम् । तस्मात् कुत्सितजीवितात् त्वमेव मां उद्धारयः । अहं तव पुत्र इति मत्वा शतापराधिनं मां क्षमस्व ।

अहर्निशम् =रात्रिन्दिवम् । पुत्रधिया =पुत्र इति बुद्ध्या । शतागसं = शतापराधिनं । शतं आगांसि यस्य सः = शतागाः । आगस् सकारान्तः । नियुङ्क्ष्व = नियुक्तं कुरु । प्रभूतैः = समृद्धैः । आपादयितुम् = जनयितुम् ।

भरतवाक्यम् = नाटकादीनां अन्ते क्रियमाणा प्रार्थना । सारः—विविधैर्धर्मैर्विश्वासैश्च बहुविधापि इयं भारतभूमिः ऐक्येन विजयतां । बहुविधा अपि अनून =पूर्ण । पल्वलाः =तटाकाः । कुहचन ऋद्ध = समृद्ध । पर्वतैः पल्वलैः कैदारैश्च बहुविधापि भारतभूमिः परिपूर्णैक्येन विजयताम् । बहुविधा, एवं अपि, ऐक्य....। धनिकैर्दरिद्रैः पण्डितैः मूढैः अलसैः जागरूकैश्च वैविध्यपूर्णापि भारभूमिः निरन्तरैक्येन विजयताम् ।।

चतुर्थोऽङ्कः ।

शुभं भूयात् ।

मरुः—तात, किमितः परं ते हितं करोमि ।
हिमा—किमतः परं हितमस्ति । तथापीदं भवतु भरतवाक्यम् ।

(सर्वे मुकुलितहस्ताः । एककण्ठताललयं गायन्ति ।)

बहुविधैर्मतैर्धर्मकर्मभिर्विभव रीति विश्वास जीवनैः
बहुविधाऽप्यनूनैक्यशोभिनी विजयतां चिरं भारतावनी ॥

क्वचन पर्वताः पल्वलाः क्वचित् कुहचनर्द्धकेदार भूनयः
बहुविधैवमप्यैक्यभासिनी विजयतां चिरं भारतावनी ॥

सधननिर्धनैः प्राज्ञपामरैः अलसजागरूकैश्च मानवैः
बहुविधाऽप्यमन्दैक्यहारिणी विजयतां चिरं भारतावनी ॥

(यवनिका)
शुभं भूयात्

---

॥ अभ्यासः ॥

1 पदानि विश्लेष्य सन्धिकार्याणि विशदयत—

1) कर्मभिस्तदर्थैरेव । 2) इतोऽप्यधिकानि । महारोग इतएवाभिगच्छति । 4) आयाह्यास्यताम् । 5) सातिवृष्टिरिति । 6) पुत्राविमावास्ताम्। 7) आवामरिभिरप्यनतिक्रमणीयस्यातिथेयावास्व । 8) पाणिनिस्त्वेवमाह ।

II विश्लिष्टानि पदानि सन्धत । यथा—पुनः च इतः ततः भ्राम्यन् च एतया आनीतं अंभः आस्वदन् च = पुनश्चेतस्ततो भ्राम्यंश्चैतयानीतमम्भ आस्वदंश्च ।

1) यत् जायते इति अभिधीयते । 2) तत् म्रियते एव इति एतत् न असत्यम् । 3) ईश्वरः सर्वस्मिन् अपि अस्ति इति अभिमतम् । 4) ऋते अस्मात् अस्माकं अन्यः न बान्धवः अस्ति । 5) सत्त्वं रजः तमः च इति त्रयः गुणाः मुनिभिः आख्याताः ।

III अधोरेखाङ्कितानां पदानां अन्तलिङ्गविभक्तिवचनानि अथवा लकार-पदपुरुषवचनानि निर्दिशत ।

1) बुद्धिमतां औदार्यमावश्यकं । 2) त्वं तेन कर्मणा उत्तमतां गतः । 3) छन्दश्शास्त्रे मात्रा प्राधान्येन परिगण्यते । 4) अहं मात्रा सह गमिष्यामि ।

5) भवतां अनुग्रहेण सः सुखं जीवति । 6) भवन्तौ सुहृदौ भवतां । 7) मयि जीवति कुतः ते भयमस्ति । 8) यथा ते अवदतां तथा ते कुर्वन्ति । 9) हे स्मरेयं कामिनी विरहिणं मां दहति । 10) अहं त्वां सदापि स्मरेयं । 11) अचराणि चराणि च बहूनि वस्तूनि लोके सन्ति । 12) अहं प्रतिदिनं पादचार चराणि? ।

IV पाठालये नवागतं अध्यापकं अधिकृत्य पाठशालायाः प्रतिनिवर्तमानै द्वित्रैः बालकैः कृतम् संवादम् स्वभावनानुसारम् लिखत ।

V अद्य पठितं एकभारतभागम् अनुवदत ।

VI अष्टमे दिवसे दर्शितानां उपसर्गसहितानां क्रियापदानां भूतकाले (लिट्&लङ्) रूपाणि लिखत । यथा–अतिक्रामति,–अतिचक्राम अत्यक्रामत् । उल्लिखामि–उल्लिलेख, उदलिखम् ।

VII सप्तमाष्टमदिनपाठयोः विषया आवर्तननेन दृढीक्रियन्ताम् ।

---

सूचना– । धातूनामात्मनेपदपरस्मैपदविभागः पूर्णक्रियाणां (लकाराणां) तथा शतृशानच्प्रत्यययोश्च विषये एवावश्यकः । अन्यरूपाणां निष्पादने पदपरिगणना नावश्यकी । यथा—पठति भाषते । अपठत्, अभाषत पठतु, भाषभाण इत्यादिषु पदभेदानुकूलम् रूपभेदोपि जायते । पठित्वा भाषित्वा, पठितुं भाषितुं, पठनं भाषणं, पठिता भाषिता इत्यादिषु पदभेदो रूपभेदस्य कारणं न भवति ।

2 कर्मभावप्रयोगयोः परस्मैपदप्रत्ययाः कदापि न प्रयुज्यन्ते ।

3 कर्मणि भावे च विहितः 'य' प्रत्ययः सार्वधातुकरूपेष्वेव दृश्यते । यथा—लिख्यते अलिख्यत लिख्यमान स्थीयताम् आदयः । आर्धधातुकलकारेषु केवलमात्मनेपदीकरणमेवावश्यकम् । यथा— (कर्तरि) बभूव करिष्यति, लिलेख । (कर्मणि) बभूवे करिष्यते । लिलिखे । स पत्रं लिलेख । तेन पत्रं लिलिखे । रामः रावणं हनिष्यति–रामेण रावणः हनिष्यते । सा गजं द्रक्ष्यति । तया गजः द्रक्ष्यते । पठिष्यति द्रक्ष्यते इत्यादिषु दृश्यमानो यकारो न कर्मणि य प्रत्ययः किन्तु इष्य स्य इति प्रत्यययोरन्तर्गतो यकार एव ॥

# पञ्चत्रिंशो दिवसः

अथ पुराणकाव्यादिपरिचयार्थम् छात्राणां स्वयमवबोधशक्त्युत्पादनार्थम् च रामायण महाभारतादिभ्यः केचन भागा अत्रोद्ध्रियन्ते । प्रथमतः सामान्यबोधार्थम् पाठभागः साकल्यतः छात्रैः सम्यक् पठनीयः । ततः एकैकेषां पद्यानां विशेषपठनमारब्धव्यम् । तेषां अन्वयरीत्या पदानि सन्निवेश्य पदानां विभक्तिलकारादिकं स्वयं परिचेतव्यम् । ततस्तेषामनुवादश्च करणीयः । इयमत्र स्वीकरणीया पठनरीतिः ।

## वाल्मीकिरामायणम्

### बालकाण्डे (६८) अष्टषष्टितमः सर्गः ।

(विश्वामित्रः रामलक्ष्मणाभ्यां सह मिथिलां प्राप । रामः सीताविवाहार्थं तत्र विन्यस्तं धनुः बभंज । जनकः तुष्टोऽभवत् । स दशरथमानेतुं दूतान् अयोध्यां प्रेषयामास । दूताः अयोध्यां प्रापुः ।)

जनकेन समादिष्टा दूतास्ते क्लान्तवाहनाः ।
मार्गे त्रिरात्रमुषिता अयोध्यां प्राविशन् पुरीम् ॥ १ ॥

ते राजवचनाद् दूता राजवेश्म प्रवेशिताः ।
ददृशुर्देवसङ्काशं वृद्धं दशरथं नृपम् ॥ २ ॥

बद्धांजलिपुटाः सर्वे दूता विगतसाध्वसाः ।
राजानं प्रश्रितं वाक्यमब्रुवन्मधुराक्षरम् ॥ ३ ॥

---

(पद्यम्—1 समादिष्ट =आज्ञप्त । क्लान्तवाहनाः =क्लान्ता वाहना येषां ते, अर्थात् क्षीणैः अश्वैः सहिताः । उषित= वस् + इ + त । 'वस्' धातोः वकारः क्वचन स्वरीभवति । उषिताः= वासं कृतवन्तः । लिट्- उवास—ऊषतुः—ऊषुः । उषित्वा, प्रोष्य= प्रवासं कृत्वा । (क्वसु) ऊषिवस् ।

2. वेश्म (न. न. द्वि. ए)= भवनं । सङ्काश= सदृश । बद्धांजलिपुटाः =अंजलिपुटानि बध्वा । साध्वसं= भयं । विगतं साध्वसं येषां ते साध्वस रहिता इत्यर्थः । प्रश्रित= विनीत । अब्रूवन् =अकथयन् ।

"वैदेहो जनको राजा पृच्छति त्वां नराधिप ।
कुशलानामयं स्निग्धं सामात्यं सपुरोहितम् ॥ ४ ॥

पृष्ट्वा कुशलमव्यग्रं वैदेहो मिथिलाधिपः ।
कौशिकानुमते वाक्यं भवन्तमिदमब्रवीत् ॥ ५ ॥

"पूर्वं प्रतिज्ञा विदिता वीर्यशुल्का ममात्मजा ।
राजानश्च कृतामर्षा निर्वीर्या विमुखीकृताः ॥ ६ ॥

सेयं मम सुता राजन् विश्वामित्रपुरःसरैः ।
यदृच्छयागतैर्वीरैः निर्जिता तव पुत्रकैः ॥ ७ ॥

तच्च रत्नं धनुर्दिव्यं मध्ये भग्नं महात्मना ।
रामेण हि महाबाहो महत्यां जनसंसदि ॥ ८ ॥

अस्मै देया मया सीता वीर्यशुल्का महात्मने ।
प्रतिज्ञां तर्तुमिच्छामि तदनुज्ञातुमर्हसि ॥ ९ ॥

सोपाध्यायो महाराज पुरोहितपुरस्कृतः ।
शीघ्रमागच्छ भद्रं ते द्रष्टुमर्हसि राघवम् ॥ १० ॥

---

4. अनामयं =सौख्यं । स्निग्धं= सस्नेहं । सामात्यं =अमात्यैः सह । 5. अव्यग्रं =समस्तं । वैदेहः =जनकः । 6. विदित =ज्ञात । शुल्कं= स्त्रीधनं । वीर्यमेव शुल्कं यस्याः सा । यो वीरतां प्रदर्शयति तस्मै एव आत्मजा दास्यते इति जनकस्य प्रतिज्ञा आसीत् । अमर्षः =कोपः । कृतामर्षाः =अमर्षम् कृतवन्तः । 7. यदृच्छया आगतैः वीरैः निर्जिता । पुत्रकैः सुता निर्जिता =पुत्रकाः सुतां निरजयन् । पुत्रकः= पुत्रः । कोमलत्वमल्पत्वं वा द्योतयितुं 'क' प्रत्ययो नामभिः सह यथोचितं प्रयुज्यते । कन्यका= कन्या । बालिका =बाला । लतिका =लता । 8. रत्नं धनुः =उत्तमश्चापः । संसद्=सभा 9. अस्मै देया मया सीता=अहं सीतां अस्मै यच्छेयम् । तर्तुं= तरणं कर्तुं, निर्वोढुं । त्वं अनुज्ञातुं अर्हसि= त्वया अनुज्ञा करणीया । भवन्तः सत्यं वक्तुमर्हन्ति= भवद्भिः सत्यं वक्तव्यं । तं सन्तः श्रोतुमर्हन्ति =स सद्भिः श्रोतव्यः । 10 द्रष्टुमर्हसि राघवं =त्वया

प्रतिज्ञां मम राजेन्द्र निर्वर्तयितुमर्हसि ।
पुत्रयोरुभयोरेव प्रीतिं त्वमुपलप्स्यसे" ॥ ११ ॥

एवं विदेहाधिपतिर्मधुरं वाक्यमब्रवीत् ।
विश्वामित्राभ्यनुज्ञातः शतानन्दमते स्थितः ॥ १२ ॥

दूतवाक्यं तु तच्छ्रुत्वा राजा परमहर्षितः ।
वसिष्ठं वामदेवं च मन्त्रिणश्चैवमब्रवीत् ॥ १३ ॥

गुप्तः कुशिकपुत्रेण कौसल्यानन्दवर्धनः ।
लक्ष्मणेन सह भ्रात्रा विदेहेषु वसत्यसौ ॥ १४ ॥

दृष्टवीर्यस्तु काकुत्स्थो जनकेन महात्मना ।
संप्रदानं सुतायाः स राघवे कर्तुमिच्छति ॥ १५ ॥

यदि वो रोचते वृत्तं जनकस्य महात्मनः ।
पुरीं गच्छामहे शीघ्रं मा भूत्कालस्य पर्ययः ॥ १६ ॥

मन्त्रिणो बाढमित्याहुः सह सर्वैर्महर्षिभिः ।
सुप्रीतश्चाब्रवीद्राजा श्वो यात्रेति स मंत्रिणः ॥ २७ ॥

मंत्रिणस्तु नरेन्द्रस्य रात्रौ परमसत्कृताः ।
ऊषुः प्रमुदिताः सर्वे गुणैः सर्वैः समन्विताः ॥ १८ ॥

---

राघवो द्रष्टव्यः । 12. शतानन्दः = जनकस्य पुरोहितः । 13. मन्त्रिणः च एवं अब्रवीत् । 14. गुप्तः = रक्षितः । 15. कुशिकपुत्रः = विश्वामित्रः । 16. गच्छामहे (वाल्मीकेः काले परस्मैपदात्मनेपदभेदो नासीदित्यस्येद-मतिस्पष्टमुदाहरणम्) पर्ययः = विलंबः । मा भूत् = न भवेत् । मा इत्य-व्यययोगे भूतकालस्य अकारो लुप्यते इत्यतः अभूत् इति रूपं भूत् इति परिणतम् । बाढम् = alright.

## महाभारतम्

### वनपर्वणि अष्टपञ्चाशत्तमोऽध्यायः

प्रकरणम्:—नलोपाख्याने कलेः देवानां च संवादः।

अथ महाभारतभाषापरिचयमाधातुं तस्मात् ग्रन्थरत्नात् कमप्यंशं उद्धर्तुमिच्छामि। पाण्डवानां वनवासकालः। एकस्मिन् अवसरे बृहदश्वो नाम कश्चित् महान् ऋषिः तत्राजगाम। युधिष्ठिरस्तु तं यथाविधि पूजयामास। स महर्षिः पाण्डवमनःसमाश्वासनार्थम् नलकथां प्रस्तौति। "नलस्तु तादृशः कश्चिद् राजा आसीत् यः स्वधर्मात् न व्यतिचचाल। अतः सः अन्ते आनन्दं लेभे। हे युधिष्ठिर, भवानपि भ्रातृभिः सह आपदि समापतितः। एतादृश्यां दशायां भवद्भिः स्थिरचित्तैः भवितव्यम्। विजयो निश्चित एव।" ईदृशं तत्त्वं नलकथाद्वारा स मुनिः कथयित्वा पाण्डवान् आश्वासयति।

पाठसंक्षेपः—इन्द्रादीनां समक्षं नलः दमयन्तीं पर्यणयत्; निराशा अपि अनुरूपदम्पत्योर्मेलनेन सन्तुष्टा इन्द्रादयो लोकपाला विदर्भनगरात् प्रतिन्यवर्तन्त। मध्येमार्गं ते द्वापरेण सह आयान्तं कलिं ददृशुः। कलिरपि दमयन्तीं कामयमानः तत्परिणयार्थमेव आगच्छन्नासीत्। दमयन्त्या नलेन सह विवाहः संजात इति इन्द्रमुखात् श्रुत्वा कलिरसूयालुरभवत्। नलः एतस्मिन् विषये दण्डनीय इति कलिरभाषत। दमयन्त्या नलपरिणय उचित एवेति इन्द्रादयः कलिमाभाष्य स्वर्गं ययुः। कलिः 'नलं भ्रष्टराज्यं करिष्यामि' इति इति शपथं करोति।

बृहदश्व उवाच

वृते तु नैषधे भैम्या लोकपाला महौजसः।<br>
यान्तो ददृशुरायान्तं द्वापरं कलिना सह ॥ १ ॥

---

[पद्यम् 1—अन्वयः—नैषधे भैम्या वृते सति यान्तः महीपालाः कलिना सह आयान्तं द्वापरं ददृशुः। वृते सति=यदा अव्रियत तदा।

अथाब्रवीत् कलिं शक्रः सम्प्रेक्ष्य बलवृत्रहा ।
"द्वापरेण सहायेन कले ब्रूहि क्व यास्यसि" ॥ २ ॥

ततोऽब्रवीत् कलिः शक्रं "दमयन्त्याः स्वयंवरम् ।
गत्वा हि वरयिष्ये तां मनो हि मम तां गतम्" ॥ ३ ॥

तमब्रवीत् प्रहस्येन्द्रो "निर्वृत्तः स स्वयंवरः ।
वृतस्तया नलो राजा पतिरस्मत्समीपतः" ॥ ४ ॥

एवमुक्तस्तु शक्रेण कलिः कोपसमन्वितः
देवान् आमन्त्र्य तान् सर्वान् उवाचेदं वचस्तदा ॥ ५ ॥

"देवानां मानुषं मध्ये यत् सा पतिमविन्दत ।
ततस्तस्या भवेत् न्याय्यं विपुलं दण्डधारणम्" । ॥ ६ ॥

एवमुक्ते तु कलिना प्रत्यूचुस्ते दिवौकसः ।
"अस्माभिः समनुज्ञाते दमयन्त्या नलो वृतः ॥ ७ ॥

का च सर्वगुणोपेतं नाश्रयेत नलं नृपम् ।
यो वेद धर्मानखिलान् यथावच्चरितव्रतः ॥ ८ ॥

योऽधीते चतुरो वेदान् सर्वानाख्यानपञ्चमान् ।
नित्यं तृप्ता गृहे यस्य देवा यज्ञेषु धर्मतः ॥ ९ ॥

अहिंसानिरतो यश्च सत्यवादी दृढव्रतः ।
यस्मिन् दाक्ष्यं धृतिर्ज्ञानं तपः शौचं दमः शमः ।
ध्रुवाणि पुरुषव्याघ्रे लोकपालसमे नृपे ॥ १० ॥

---

2. अब्रवीत् =अवदत्, अवोचत् । शक्रः =इन्द्रः । बलस्य वृत्रस्य च हन्ता । 'हन्' नकारान्तः, तस्य प्रथमा वृत्रहा । सहायः =सखा । ब्रूहि = कथय । प. 5. आमन्त्र्य =आहूय । उवाच—ऊचतुः—ऊचुः, 'वच्' धातोः लट= अवदत् । प. 6. अन्वयः—यद् (यस्मात्) देवानां मध्ये सा मानुषं पतिं अविन्दत (अलभत) ततः तस्याः न्याय्यं विपुलं दण्डधारणं भवेत् । प. 7. अस्माभिः समनुज्ञाते (सति) =अस्मदाज्ञानुसारमेव । (सप्त प्रभृति (आरभ्य) द्वादश पर्यन्तम् पद्यैः नलस्य गुणगणान् कीर्तयति) । ध्रुवाणि =दृढानि ।

एवंरूपं नलं यो वै कामयेच्छपितुं कले ।
आत्मानं च शपेन्मूढो हन्यादात्मानमात्मना ॥ ११ ॥

एवंगुणं नलं यो वै कामयेच्छपितुं कले ।
कृच्छ्रे स नरके मज्जेदगाधे विपुले ह्रदे ।
एवमुक्त्वा कलिं देवा द्वापरं च दिवं ययुः ॥ १२ ॥

ततो गतेषु देवेषु कलिर्द्वापरमब्रवीत् ।
"संहर्तुम् नोत्सहे कोपं नले वत्स्यामि द्वापर ॥ १३ ॥

भ्रंशयिष्यामि तं राज्यात् न भैम्या सह रंस्यते ।
त्वमप्यक्षान् समाविश्य साहाय्यं कर्तुमर्हसि" ॥ १४ ॥

## महाभारतम् — २

[पौराणिकगद्यशैल्याः परिचयमाधातुं महाभारतात् कमपि भागमत्रो-द्धर्तुमिच्छामि । पद्यभूयिष्ठे तस्मिन् महाग्रन्थे गद्यानि नितरां विरलानि । तथापि तेषां सारल्यं अनुभववेद्यमेव । सन्दर्भः—

आयोद इत्यपरनाम्ना विख्यातस्य धौम्यमहर्षेः त्रयः शिष्या आसन्, आरुणिः उपमन्युः वेद श्चेति ।

एकस्मिन् दिने धौम्यः स्वशिष्यमारुणिं प्रातः शालीक्षेत्रसंरक्षणार्थं नियुयोज । तत्र गत्वा आरुणिः क्षेत्रसेतुं भग्नं ददर्श । स शिलाशकलैः मृत्-पिण्डैश्च भग्नं सेतुं सम्यग् बन्धुं यत्नमकरोत् । यत्नो विफलोऽभवत् । अन्ते स एव स्वयं भग्ने स्थले प्रवाहमध्ये शयानो जलधारां रुरोध । स तत्रैव अशेत ।

अत्र तु आश्रमे महर्षिर्धौम्यः शिष्यैः सह मध्याह्नप्राशनार्थमुपाविशत् । शिष्यानन्तरा स अरुणिं न ददर्श । "आरुणिर्नात्र दृश्यते । स कुत्र गतः ? आः स मया प्रातः शालिक्षेत्रं प्रेषितः" धौम्यः सस्मार । स झटित्येव शिष्यैः

---

कामयेत् = इच्छेत् । ह्रदः = नदीनां अगाधः प्रदेशः । संहर्तुम् = नियन्त्रितुम् ॥
रंस्यते = आनन्दमनुभविष्यति = रम् + स्य + ते । अक्षः = द्यूतोपकरणम् ।
वत्स्यति = वस् + स्य + ति । मज्जेत् = मग्नो भवेत् ।

गतः शालीक्षेत्रं गतः स अरुणिं आजुहाव, तत्रैव तथैव शयानं तं ददर्श च। शिष्यस्यात्मगुणैः सन्तुष्टधीः धौम्यः तमनुगृह्य लोकसेवार्थं प्रेषयामास।]

महाभारते आदिपर्वणि तृतीयोऽध्यायः।

एतस्मिन्नन्तरे कश्चिदृषिः धौम्यो नामायोदः; तस्य शिष्यास्त्रयो बभूवुः, उपमन्युरारुणिर्वेदश्चेति।

स एकं शिष्यमारुणिं पांचाल्यं प्रेषयामास, "गच्छ, केदारखण्डं बधान" इति।

स उपाध्यायेन सन्दिष्ट आरुणिः पांचाल्यस्तत्र गत्वा तत् केदारखण्डं बध्धुं नाशकत्। स क्लिश्यमानोऽपश्यदुपायम् "भवतु एवं करिष्यामी" ति।

स तत्र संविवेश केदारखण्डे; शयाने च तथा तस्मिंस्तदुदकं तस्थौ।

ततः कदाचिदुपाध्याय आयोदो धौम्यः शिष्यानपृच्छत् "क्व आरुणिः पांचाल्यो गत' इति।

ते तं प्रत्यूचुः "भगवन्, त्वयैव प्रेषितो" गच्छ केदारखण्डं बधानेति। स एवमुक्तस्तान् शिष्यान् प्रत्युवाच। "तस्मात् तत्र सर्वे गच्छामो यत्र स गत" इति।

स तत्र गत्वा तस्याह्वानाय शब्दं चकार। "भो आरुणे पांचाल्य क्वासि वत्स एहि" इति।

स तच्छ्रुत्वा अरुणिरुपाध्यायवाक्यं तस्मात् केदारखण्डात् सहसो-त्थाय तमुपाध्यायमुपतस्थे।

प्रोवाच चैनं, अस्म्यत्र केदारखण्डे निःसरमाणमुदकं अवारणीयं संरोद्धुं संविष्टो भगवच्छब्दं श्रुत्वैव सहसा विदार्य केदारखण्डं भवन्तमुपस्थितः।

तदभिवादये भगवन्तं आज्ञापयतु भवान् कमर्थम् करवाणीति।

---

[केदारखण्डं = शालीक्षेत्रखण्डं। बधान (बध्. लोट्. पर. म. ए) भग्नं क्षेत्रसेतुं बद्ध्वा जलप्रवाहं निवारय इत्याशयः। पांचाल्यः पांचालदेशीयः। अशकत् = शक्तोऽभवत्। संविवेश = अशेत *lay*. एहि = आगच्छ। विदार्य = भित्त्वा। अवाप्स्यसि = लप्स्यसे। प्रतिभास्यन्ति = यथासमयं मनसि समुन्मेषिष्यन्ति।]

स एवमुक्त उपाध्यायः प्रत्युवाच; "यस्मात् भवान् केदारखण्डं विदीर्योत्थितस्तस्मादुद्दालक एव नाम्ना भवान् भविष्यति इत्युपाध्यायेनानुगृहीतः ।

यस्माच्च त्वया मद्वचनमनुष्ठितं तस्माच्छ्रेयोऽवाप्स्यसि । सर्वे च वेदाः प्रतिभास्यन्ति सर्वाणि च धर्मशास्त्राणीति ।"

स एवमुक्त उपाध्यायेनेष्टं देशं जगाम

---

॥ प्रयोगविशेषाः ॥

'एवमुक्तस्तु शक्रेण' 'एवमुक्ते' तु कलिना' इत्यादिप्रयोगेषु कः कं वदति, को वक्ता, कः श्रोता इति भ्रमो जायेत । एतत् प्रयोगवैचित्र्यमधिकृत्य एकादशे दिवसे विवृतमेव । तदेव दृढीकर्तुम् अत्र कतिचनोदाहरणान्यपि दीयन्ते ।

शक्रेणोक्तः कलिरुवाच =शक्रः कलिमुक्तवान्; तत् श्रुत्वा कलिरुवाच । भरतेनार्थितो रामः स्वीचकार न मेदिनीम् =भरतो राममभ्यर्थयामास, एवमर्थितो रामो मेदिनीं न स्वीचकार । इत्यादिप्रयोगेष्वर्थग्रहणं सुशकमेव । किन्तु एवमुक्ते तु कलिना" इत्यादौ उक्ते इन्येतत् पदं केन संबन्द्धमिति ज्ञातुं क्लेशलेशोऽनुभूयेत । अयं सप्तमीविभक्तेः विशेषप्रयोग इत्यवधार्यम्, यद् द्वादशे दिने सम्यग् विवृतमस्ति । यदायं वाक्यांशोऽपग्रथ्यते तदा 'कलिना इन्द्रे एवमुक्ते सति' अर्थात् 'यदा कलिः इन्द्रं एवमुवाच तदा' इतीदृशं पूर्णरूपं भजति । 'पृष्टा सीता' 'उक्तः राम.' इत्यादिप्रयोगेषु सीता रामश्च केवलं श्रोतारौ; न तु वक्तारौ भवतः । पृष्टा सीता इत्यस्य केनचित् पृष्टा सीता अर्थात् कश्चित् सीतामपृच्छत् तादृशी सीता इति तात्पर्यम् । तथैव उक्तः रामः इत्यस्य केनचित् राम उक्तः अर्थात् कश्चन राममुवाच, तादृशो राम इत्यर्थः । अत्र सीता रामश्च पृष्टा उक्तः इत्येतयोः कृत् प्रत्ययान्तयोः अंगक्रियोः कर्मणी भवतः । अयं च कर्मणप्रयोगः । अतोऽत्र कर्मणः प्राधान्यमस्ति । तस्मात् कर्मपदमेवात्र दृश्यते । कर्तुः प्राधान्याभावात् कर्तृपदमत्र न प्रयुक्तमिति ज्ञेयम् ।

उक्ता शकुन्तला मुग्धं प्रत्युवाच नराधिपम् ।
'श्रतस्त्वम् बहुशो भूप दृष्टस्त्वं न नराधिप' ।
एवं निगदिते भूपे बभूव प्रीतमानसः ।

अत्र उक्ता शकुन्तला इत्यत्र न खलु शकुन्तलायाः कर्तृत्वमस्ति। दुष्यन्तेन उक्ता शकुन्तलेत्यवधार्यम् । यदि शकुन्तलायाः कर्तृत्वं विवक्षितम् तर्हि शकुन्तला उक्तवती (दुष्यन्तं) इति भाव्यम् । तथैव श्रुतस्त्वमित्यत्र मया त्वं श्रुतः अर्थात् अहं त्वां श्रुतवतीत्यर्थः । दृष्टस्त्वं न = मया त्वं न दृष्टः (अहं त्वां न दृष्टवती) । एवं निगदिते भूपे = यदा तदा भूपः एवं निगदितः (कथितः) तदा अर्थात् तस्यां भूपं एवं उक्तवत्यां = यदा सा भूपं एवमुवाच तदा ।

इदमत्र विशिष्य स्मरणीयम्—क्तप्रत्ययेन युक्तः सकर्मको धातुः लिंगवचन विभक्तिषु कर्मणा सह संबध्नाति । कर्तुः प्राधान्याभावात् प्रायशो वाक्ये कर्ता न दृश्येत । यदि स एव क्तप्रत्ययः अकर्मकधातुभिः सह प्रयुज्यते तर्हि सा अंगक्रियाऽङ्गादिर्वा कर्तृपदेन सह संबध्नाति । अकर्मकत्वात् कर्मणा सह बन्धस्यावकाशोऽपि न संभवति । अधो दत्तेभ्यो वाक्येभ्यः उक्तं स्पष्टं भवति ।

| सकर्मकांगक्रियाः | अकर्मकांगक्रियाः |
|---|---|
| हते रावणे लङ्का शून्याऽभवत् | तीरे स्थितस्य वृक्षस्य शाखा छिन्ना । |
| ताडितानां बालानां एकः आक्रन्दत् । | गृहमागतः सखा प्रतिनिवृत्तः । |
| न कृतं सुकृतं किंचित् । | जातस्य हि ध्रुवो मृत्युः । |

अत्र सकर्मकक्रियाः तासां कर्मभिः तथा अकर्मकक्रियाः कर्तृभिश्च बद्धा इति स्पष्टमेव । हत इत्यत्र हननक्रियायाः कर्मैव रावणः । रामेण इति कर्तृपदस्य प्राधान्यं न विवक्षितम् । अतस्तन्नात्र प्रयुक्तम् । स्थित इत्येतदकर्मकम् । अतस्तद्वृक्षेण संबध्नाति ।

आशयानामाविष्करणे कालप्रकारयोर्वैविध्यात् रूपाण्यपि विविधानि भवन्ति । तेषां सर्वेषामपि प्रकाशनार्थं कस्यामपि भाषायां पर्याप्ताः प्रत्यया न विद्यन्ते । अन्यधातूनामनुप्रयोगेणैव तादृशमर्थवैचित्र्यं वैविध्यं च स्पष्टीक्रियते । जाता है, जा रहा है, जाया करता है, इत्यादयो हिन्दीभाषायां तथा He writes, He is writing, He has written

इत्यादय आंगल्यां चास्य वैचित्र्यस्योदाहरणानि । हिन्द्यां रह, कर इत्येतयोः धात्वोः आंगल्यां be, have इत्यनयोश्च अनुप्रयोग एव अत्र वर्तमानकाले अर्थवैचित्र्यं जनयति ।

कालप्रकारयोर्वैचित्र्यपरिचयार्थं तुलनात्मकतया पठनाय केचन प्रयोगा अत्र प्रदीयन्ते । एकस्यां भाषायां विद्यमानानां प्रयोगाणां समानाः प्रयोगाः अन्यस्यां भाषायां नैव सुलभं दृश्यन्ते । प्रयोगाणां सामान्यबोधार्थमिदं पर्याप्तं स्यादिति मन्ये ।

॥ अकर्मकः 'जीव्' धातुः कर्तरि भावे च ॥

| | | | |
|---|---|---|---|
| १ | स जीवति । | *He lives* | वह जीता है । |
| २ | स जीवन् अस्ति । | *He is living* | वह जी रहा है । |
| ३ | स जीवन् आसीत् । | *He was living* | वह जी रहा था ॥ |
| ४ | स जीवितः अस्ति । | *He has lived* | वह जिया है । |
| ५ | स जीवित आसीत् । | *He had lived* | वह जिया था । |
| ६ | स जीवन् स्यात् । | *He would be living* | वह जी रहा होगा । |
| ७ | स जीवितः स्यात् । | *He would have lived* | .......तो वह जीता । |
| ८ | तेन जीवितमस्ति । | *He lives* | उससे जिया जाता है । |
| ९ | तेन जीवितमासीत् । | *He lived* | उससे जिया गया । |
| १० | तेन जीवितं स्यात् । | *He would have lived* | उससे जिया गया होगा । |
| ११ | तेन जीवितव्यमस्ति । | *He has to live* | उसको जीना है |
| १२ | तेन जीवितव्यमासीत् । | *He had to live* | उसको जीना था । |
| १३ | तेन जीवितव्यमस्ति । | *He would have to live* | उसको जीना होगा । |
| १४ | तेन जीवता भवितव्यं । | *He would be living* | वह जीता होगा । |

॥ सकर्मकः 'दृश्' धातुः कर्मणि ॥

| | | |
|---|---|---|
| १ | मया चन्द्रः दृश्यते । | *The moon is seen by me* मुझसे चांद देखा जाता है । |
| २ | मया चन्द्रः दृश्यमानः अस्ति । | *The moon is being seen by me* मुझसे चांद देखा जा रहा है । |

| | |
|---|---|
| मया चन्द्रः दृश्यमानः आसीत् । | *The moon was being seen by me.* <br> मुझसे चांद देखा जा रहा था । |
| मया चन्द्रः दृष्टः अस्ति । | *The moon has been seen by me* <br> मुझसे चांद देखा गया है । |
| मया चन्द्रः दृष्ट आसीत् । | *The moon had been seen by me* <br> मुझसे चांद देखा गया था । |
| मया चन्द्रः दृश्यमानः स्यात् । | *The moon would be seen by me.* <br> मुझसे चांद देखा जाता होगा । |
| मया चन्द्रः दृष्टः स्यात् । | *The moon would have been seen by me.* <br> मुझसे चांद देखा गया होगा । |
| मया चन्द्रः द्रष्टव्यः अस्ति । | *The moon has to be seen by me.* <br> मुझसे चांद देखा जाना है । |
| मया चन्द्रः द्रष्टव्य आसीत् । | *The moon had to be seen by me.* <br> मुझसे चांद देखा जाना था । |
| मया चन्द्रः द्रष्टव्यः स्यात् । | *The moon would have to be seen by me.* <br> मुझसे चांद देखा जाना होगा । |

---

॥ अभ्यासः ॥

I अधोनिर्दिष्टां खण्डिकां शुद्धीकृत्य लिखत ।

उत्तानपादस्य राजस्य द्वौ भार्ये आसीत् । सुनीतिः सुरुचि इतिः तेषां नामौ आसन् । सुनीतिस्य ध्रुवः सुरुच्या उत्तमः इति द्वौ पुत्र अजायन्त । महाराजा सुरुचि अधिकं अस्निह्यत् ।

एकदा सुरुचिस्य पुत्रः उत्तमः पितुस्य अङ्के अधिरोहन् वर्तत । तं ध्रुवः अदृश्यत् । स अपि अङ्के तिष्ठितुं अभिलषित्वा पित्रुः समीपं अगच्छति स्म । अङ्कं अधिरोहितं सुतं सुरुच्या अदृश्यत । सुरुचि आत्मवा

# षट्त्रिंशो दिवसः

॥ कुमारसंभवम् ॥

(मदनस्य स्थाण्वाश्रमप्रवेशावधि कथासंक्षेपः ॥)

प्रजापतेर्दक्षस्य सती नाम पुत्री आसीत् । तां परमशिवः पर्यणयत् । जामातृश्वशुरयोः मध्ये कालान्तरे कैश्चन कारणैः स्पर्धा अवर्धत ।

अत्रान्तरे दक्षः कंचन यागमारभत । तस्मिन् स्वजामाता शिवो न तेन निमन्त्रितः । पित्रा अनिमन्त्रितापि भर्त्रा निरुद्धा अपि सती पितृस्नेहविधेया भूत्वा दक्षगृहं गता । यथा प्रतीक्षितं शिवेन तथैव संवृत्तम् । दक्षेण सा अनादृता अधिक्षिप्ता च । सा स्वभर्तृगृहं कैलासं प्रति निवर्तितुमक्षमा भूत्वा योगाग्निं विवेश । अग्निप्रवेशात् प्राक् सैवं प्रार्थयामास । "यदि मे पुनरपि जनिः स्यात् तर्हि तदानीमपि परमशिव एव मे भर्ता भवेत्" इति! पत्न्याः देहत्यागवार्तामाकर्ण्य शिवो नितरामदूयत । "इतः परं अपत्नीको ब्रह्मचर्यमवलंब्य जीवितं नेष्यामि" इति निश्चित्य स हिमालये तपश्चरन् कालमनयत् ।

एतस्मिन्नवसरे तारको नामासुरः ब्रह्माणं तपसा प्रसाद्य इष्टान् वरान् अवाप । "न कोपि मे हन्ता स्यात् । यदि हनिष्यति तर्हि परमशिवस्य बीजात् उत्पत्स्यमानः पुत्र एव मां हन्तुं प्रभवेत" इति । "शिवस्य ब्रह्मचर्यभंगः पत्नीप्राप्तिश्च नैव पुनः संभवेतां, ततः कथं शिवबीजात् पुत्रनिष्पत्तिः स्यात्" इत्ययं वराभ्यर्थनासमये तारकस्य विचार असीत् । लब्धवरः स दानवः दृप्तःसन् त्रीन् लोकान् अर्दितुमारभत ।

अत्रान्तरे सती हिमवतः पत्न्यां जनिमलभत । सा पार्वतीति नाम्ना प्रथिता चासीत् । कदाचित् तत्र समागतो नारदः तां कन्यां दृष्ट्वा "इयं परमशिवस्य पत्नी भविष्यती" त्युवाच । तत् श्रुत्वा प्रीतो हिमवान् स्वपुत्रीं तत्रैव तपश्चरन्तं स्थाणुं (शिवं) परिचरितुं प्रेषयामास । पूर्वजन्मवासनावशात् पार्वती शिवपरिचरणे अतीवासक्ता चाभवत् ।

अत्र तु देवलोके तारकपीडनेन सर्वमप्युच्चावचमभूत् । इन्द्रः देवगणै सह ब्रह्माणं शरणं प्राप । इन्द्रात् तारकपीडनप्रकारं देवानां व्यथाकारणं च ज्ञात्वा ब्रह्मा तत् परिहारार्थमुपायानुपदिदेश । "पार्वती शिवस्य परिचरणे व्यापृता वर्तते । यथाकथंचित् तया शिवस्य तपोभंगः करणीयः । तदर्थम् यूयं यतध्वम्" इति ।

इन्द्रः प्रतिनिवृत्तः । स तस्मिन् कर्मणि विदग्धं कामदेवं सस्मार । स स्मृतमात्र एव समायातः । शिवस्य तपोभंगरूपं कार्यम् तस्मै न्यवेदयत् । ततः स्वामिनोऽभ्यर्थनया समुत्फुल्लहृदयः कामदेवः सपरिवारः स्थाण्वाश्रमं प्रति प्रतस्थे । [प्राक्–पूर्वं । जनिः—जन्म । अर्दितुं—पीडयितुम् । व्यथा = दुःखं । उच्चावचम् = अव्यवस्थितम् अथवा सङ्कुलम्]

॥ स्थाण्वाश्रमः ॥

हिमवतो हिमावृते सानुप्रदेशे परमशिवस्य तपोवनम् दृश्यते । लौकिका विकारा न तत्र पदं कुर्वन्ति । सर्वमपि शान्तं मूकं गंभीरं च । परमशिवः ध्याननिमग्नः सन् लतागृहान्तरध्यास्ते । पार्वती सख्यौ च पुष्पापचयार्थं गताः । एतस्मिन् एव समये परमेश्वरस्य तपोभंगं कर्तुम् वसन्तमन्दानिल चन्द्रिकादिसखस्य रतिद्वितीयस्य कामदेवस्यागमनमभूत् ।

तपोवनं साकल्यतो विकारमवाप । अशोकाः झटित्येव पुष्पिता अभवन् । भृंगा गुंजन्तो विचेरुः । वनश्रीः तिलकिता व्यराजत; अरुणाधरं मसृणीचकार च । कोकिलश्चुकूज । हरिणा मदोद्धता व्यचरन् ।

अस्मिन् समये तपोवने विद्यमानानां चराणां अचराणां च प्राणिनां संजाता आकस्मिका विकारभेदा एवात्र वर्णनाविषयः । कालिदासस्य प्रतिभा अस्मिन्नवसरे नियन्त्रणां विजहाति । तृतीयसर्गात् कतिचन पद्यान्येव अत्रो द्ध्रियन्ते । कुमारसंभवात्मकस्य सहस्रपत्रस्य कतिचन दलान्येवात्र प्रद-र्श्यन्ते । पूर्णतया विकसितस्य कुसुमस्य सौन्दर्यम् सौरभ्यं वा तदेकदेशैः द्वित्रैरेव दलैर्बोधयितुं अशक्यमेव । तद् आस्वदितुं स्वयमेव प्रयत्नः करणीयः ।

[पुष्पापचयः = कुसुमलुंचनम् । झटिति = द्रुतं । स कलतः = पूर्णतया । विजहाति — त्यजति । सहस्रपत्रं = कमलम् । अशक्यं = असाध्यम् ।]

1 तं देशमारोपितपुष्पचापे रतिद्वितीये मदने प्रपन्ने
काष्ठागतस्नेहरसानुविद्धं द्वन्द्वानि भावं क्रियया विवव्रुः ॥

मदने तं देशं प्राप्ते सति तत्रत्यानि खग मृग वृक्षमिथुनानि कामविकारं प्रकटीचक्रुरिति सारः । आरोपितपुष्पचापः =पुष्पचापमारोपितवान् । रतिद्वितीयः =रत्या सहितः । प्रपन्नः =प्राप्तः । परमकाष्ठां प्राप्तेन स्नेहरसेन संपृक्तं (संबद्धं) । द्वन्द्वानि =मिथुनानि, स्त्रियः पुरुषाश्च । विववार-विवव्रतुः—विवव्रुः, विवृण्वन्ति स्म, प्रकटयामासुः । मदने तं देशं प्रपन्ने (सति) इति पदयोजना ।

2 मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः ।
शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥

द्विरेफः =भ्रमरः (भ्रमरशब्दे द्वौ रेफौ स्तः अतः द्विरेफो भ्रमरपर्यायोऽभूत्) भ्रमरः स्वप्रियया सह पुष्पचषके मधुपानं चकार । पपौ—पपतुः —पपुः 'पा धातुः । कृष्णसारः (मृगः) शृङ्गाग्रेण स्वप्रियायाः कण्डूं अपानयत् । कण्डूयनसमये स्पर्शसुखेन मृग्याः अक्षिणी निमीलिते आस्ताम् । कुसुममेव एकपात्रं । स्वां =निजां । अकण्डूयत =*Scratched*.

3 ददौ रसात् पङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः ।
अर्धोपभुक्तेन बिसेन जायां संभावयामास रथांगनामा ॥

करिणी स्वप्रियाय करिणे शुण्डाग्रेणादत्तं जलं ददौ । चक्रवाक बिसस्यार्धं भक्षित्वा तदवशिष्टं भागं जायायै च ददौ । करेणुः= करिणी । बिसं= मृणालम् **Lotus-stalk.** संभावयामास =सप्रेमादरं ददौ । रथांगनामा= चक्रवाकः । शुण्डा =गजानां करः *(Trunk.)*

4 गीतान्तरेषु श्रमवारिलेशैः किंचित् समुच्छ्वासितपत्रलेखम् ।
पुष्पासवाघूर्णितनेत्रशोभि प्रियामुखं किम्पुरुषश्चुचुंबे ।

गानालापनमन्तरा किन्नरः प्रियामुखं अचुंबत । श्रमवारिलेशैः= स्वेदकणैः । समुच्छ्वासित= विच्छिन्न, त्रुटित । पत्रलेखा= युवतीनां स्तनगण्डाद्यवयवेषु प्रियैः गैरिकादिभिर्विरचयमाना विचित्रा रेखाः । पुरातने काले विषयासक्ताः पुरुषाः स्वपत्नीनां वक्षसि गण्डे तथा आकर्षकेष्वन्ये ष्ववयवेषु गैरकादिभिर्लेपनद्रव्यैः विविधा रेखा रचयन्ति स्म । येलेखनावसरेषु

तत्तदवयवान् दृष्टवा च ते परानन्दमनुभवन्तु । स्वविवेकेन अभीष्टा-नवयवान् अनावृत्य प्रदर्शनेन पत्न्योऽपि आडोवमुदं कामपि निर्वृतिमापुः । सेयं पत्ररेखा, पत्रिका, पत्र इत्यादिभिरर्पपदिश्यते । किञ्चित् समुच्छ्वासिताः पत्ररेखा यस्मिन् तद् (मुखम्) । (कुसुमासवपानेन मधुपानेन) आघूर्णिताभ्यां नेत्राभ्यां शोभमानं (मुखं) ।

(किन्नरः, =किंपुरुषः । हिमचलः प्रान्तप्रदेशेषु निवसन् जनवर्गः । हिमालयस्य पूर्वपूर्वासु त्यकासु भूयिष्ठं मंगोलियन् वर्गीयाः निवसन्ति खलु । तेषां पुरुषाणां मुखेषु श्मश्रु न प्ररोहन्ति । अतः पुरुषाणां स्त्रीणां च मुखं सदृशमेव दृश्यते । सन्तत हिमाघातेन स्त्रियः पुरुषाश्च देहे अनेकान् कञ्चुक कम्बलादीन् धारयन्ति । अतोऽन्ये जनाः तत्रस्थाः स्त्रियः पुरुषांश्च विवेक्तुं न शक्नुवन्ति । सर्वेऽपि स्त्रिय इव प्रतिभान्ति । भारतमागताः अपरिचिता आर्याः तान् जनविशेषान् प्रथमं नार्य इति विशश्वसुः । कालान्तरे निकटसम्पर्केण पुरुषत्वपरिज्ञाने आर्याः साद्भुतमपृच्छन् 'किं पुरुषः' 'किं नरः' इति । क्रमेण तौ शब्दौ तेषां पर्यायतां प्रापतुः । 'वानर' शब्दस्यापि व्युत्पत्तिरेवमेव स्यात् ।)

अथात्र वृक्षाः लताश्च कामुककामिनीभावेन कल्पिताः । पुष्पगुच्छाः स्तनाः, प्रवालाः ओष्ठा, शाखाः करतलाश्चेति कल्पना ।

5 पर्याप्तपुष्पस्तबकस्तनाभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः ।
लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥

पर्याप्ताः पुष्पस्तबका एव स्तनाः यासां ताः ताभ्यः । स्फुरद्भिः प्रवालैः एव ओष्ठैः मनोहराभ्यः । लता एव वध्वः । विनम्रैः शाखाभिरेव भुजैः (कृतानि) बन्धनानि । तरवः बन्धनानि अवापुः इति योजनीयम् । पर्याप्तः = अतितरां समृद्धः; पुरुषः यावदिच्छन्ति तावद् विस्तृताः पृथुलाश्चेत्यर्थः ।

एवं तपोवनं सकलमपि लौकिकाराधीनमभवत् । तदा शिव-भूतगणा अपि आत्मानियंत्रणारहिता भवेयुरिति शङ्कया तेषां नेता नन्दी स्वस्वामिनः श्रीशिवस्य ध्यानास्पदात् लतागृहात् बहिरागतः । स दक्षिणहस्तधृतं वेत्रदण्डं वामहस्तस्य प्रकोष्ठे विन्यस्य दक्षिणहस्तस्य तर्जनीं (*Fore-finger*) मुखे समर्प्य निःशब्दं सगौरवं च सूचितवान् 'मा कुरुत चापलम्' । तत्सूचनयैव गणा विनीता अभवन् ।

6) लतागृहद्वारगतोऽथ नन्दी वामप्रकोष्ठार्पितहेमवेत्रः ।
मुखार्पितैकांगुलिसंज्ञयैव "मा चापलायेति गणान् व्यनैषीत् ।।

लतागृहस्य द्वारगतः । वामप्रकोष्ठे अर्पितः हेमवेत्रः येन सः । वाम= left. दक्षिण=right. प्रकोष्ठः= हस्तस्याधस्तादर्धभागः । हेमवेत्रः= golden cane । चापलम्= चापल्यम् । मा चापलाय= चापल्यम् कर्तुम् यूयम् मा सन्नद्धा भवत । व्यनैषीत्= विनीतान् अकरोत् । वि+नी, पर. प्र. ए.) ।

यदा गणप्रमुखो नन्दी एवम् सूचनां अकरोत् तदा—
7) निष्कम्पवृक्षं निभृतद्विरेफं मूकाण्डजं शान्तमृगप्रचारम् ।
तच्छासनात् काननमेव सर्वं चित्रार्पितारंभमिवावतस्थे ।।

वृक्षा न अकम्पन्त । भ्रमराः निश्शब्दा अभवन् । पक्षिणो मूकाः तस्थुः । मृगाः शान्ताः विचेरुः । एवं सर्वमपि तत् काननतलम् नन्दिनः शासनश्रवण-मात्रे एव रेखाङ्कितमिव तस्थौ । निष्कम्पाः वृक्षाः यस्मिन् (कानने) तद् । निभृताः=निश्शब्दाः द्विरेफाः यस्मिन् तत् । मूकाः अण्डजाः पक्षिणः यस्मिन् तत् । शान्त मृगप्रचारः यस्मिन् तत् ।

एतस्मिन्नेव समये कामः सपरिवारं तस्य दृष्टिपथम् परिहृत्य नमेरुवृक्षैः निबिडम् अर्थात् बान्द्रम् शिवस्य ध्यानस्थलम् विवेश ।।

8) दृष्टिप्रपातं परिहृत्य तस्य कामः पुरः शुक्रमिव प्रयाणे ।
प्रान्तेषु संसक्तनमेरुशाखं ध्यानास्पदं भूतपतेर्विवेश ।।

जैत्रयात्रासु यदि पुरः शुक्रनक्षत्रं दृश्यते तर्हि पराजयो निश्चित एवेति लक्षणशास्त्रेषून्यस्तम् । शुक्रदर्शनम् परिहृत्यैव राजानः जैत्रयात्रामारभन्ते । तथा कामोऽपि नन्दिनः दर्शनम् परिहृत्य तस्य पार्श्वभागे एव पदं चकारेत्यर्थः । परिहृत्य=दूरीकृत्य ।, अपाकृत्य । प्रयाणे=यात्रायां । प्रान्तः= परिसरप्रदेशः । संसक्ताः= परस्परं बद्धाः नमेरूणां शाखाः यस्मिन् तत् । भूतपतेः= शिवस्य ।

कामः शिवं ददर्श । कीदृशं शिवं तत्र व्याघ्रचर्मभिरावृताय देवदारु द्रुममूले विरचितायां वेदिकायां आसीनं शिवं ददर्श । कीदृशः

कामः ? आसन्नशरीरपातः। यदा स स्थाणुं ददर्श तदैव तस्य आत्मधैर्यं सकलं विनष्टम्। स्वस्य अस्तित्वं तदा अस्ति वा न वेति तस्य जीवद्दशायामपि संशयोऽभवदित्यर्थः।

9 स देवदारुद्रुमवेदिकायां शार्दूलचर्मव्यवधानवत्याम्॥
आसीनमासन्नशरीरपातः त्रियंबकं संयमिनं ददर्श॥

देवदारुद्रुमवेदिका = देवदारुद्रुमस्याधोभागे निर्मिता किंचिदुन्नता भूमिः। शार्दूलः = व्याघ्रः। व्यवधानं = आस्तरणं। त्रियंबकं = त्रिलोचनम् शार्दू...वत्यां (ई. स्त्री. स. ए.) संयमिनम् (न. पु. द्वि. ए.)

10 अवृष्टिसंरंभमिवांबुवाहं अपामिवाधारमनुत्तरंगम्।
अन्तश्चराणां मरुतां निरोधात् निवातनिष्कम्पमिव प्रदीपम्॥

कामः शिवं ददर्श। कीदृशम् शिवम्? वर्षणे अव्यग्रं मेघमिव, तरंगरहितम् समुद्रमिव, वाताघातरहिते प्रदेशे दीप्यमानम् दीपमिव स्थितम्। इव + अंबुवाहम् = मेघम्। अपां + इव + आधारम् + अनुत्तरंगं। अपां (जलस्य) आधारः = समुद्रः। त्रियंबकं संयमिनम् ददर्श इति पूर्वपद्येन इदं पद्यं अन्वेति।

यदा स त्रियंबकं ऐक्षत तदा तस्य धैर्यं लुप्तम्, हस्तात् शरचापादिकम् अधः पतितम्। भयसंभ्रान्तः स तदपि न ज्ञातवान्।

11 स्मरस्तथाभूतमयुग्मनेत्रं पश्यन्नदूरात् मनसाप्यधृष्यम्।
नालक्षयत् साध्वससन्नहस्तः स्रस्तं शरं चापमपि स्वहस्तात्॥

स्मरः तथाभूतं अयुग्मनेत्रं पश्यन् अदूरात् मनसा अपि अधृष्यम् = अगम्य असंभावनीयम्। न अलक्षयत् = न अजानात्। साध्वससन्नहस्तः = भयेन क्लान्तः हस्तः यस्य सः। स्रस्तं = पतितम्।

स्मरस्य नष्टप्रायं आत्मबलम् पुनरुद्दीपयन्तीव पार्वती तस्मिन् समये तत्राजगाम।

12 निर्वाणभूयिष्ठमथास्य वीर्यं सन्धुक्षयन्तीव वपुर्गुणेन।
अनुप्रयाता वनदेवताभ्यां अदृश्यत स्थावरराजकन्या॥

स्थावरराजकन्या अदृश्यत= पार्वतीं अपश्यत् ।

निर्वाणभूयिष्ठं =नष्टप्रायं । सन्धुक्षयन्ती =उद्दीपयन्ती । अस्य= कामस्य ।

स्मरः तां वीक्ष्य स्वकार्यनिर्वहणे प्रत्याशामलभत ।

13) तां वीक्ष्य सर्वावयवानवद्यां रतेरपि ह्रीपदमादधानाम् ।
जितेन्द्रिये शूलिनि पुष्पचापः स्वकार्यसिद्धिं पुनराशशंसे ॥

सर्वैः अवयवैः अत्युत्कृष्टां । ह्रीपदं= लज्जानिमित्तं । आदधानां= आवहन्तीं । शूलिनि (न. पु. स. ए.)= शिवे ।

पार्वती लतागृहद्वारदेशं प्रविवेश । शिवः ध्यानात् विरराम च ।

14) भविष्यतः पत्युरुमा च शंभोः समाससाद प्रतिहारभूमिम् ।
योगात् स चान्तः परमात्मसंज्ञं दृष्ट्वा परं ज्योतिरुपारराम ॥

पत्युः+उमा । प्रतिहारभूमि=द्वारप्रदेशं । सम्+आ+सद्+अ (लिट्)= प्राप । सः= शिवः । च+अन्तः । परमात्मसंज्ञं =परमात्मरूपं । तेजः= ज्योतिः । उपारराम =विरराम, न्यवर्तत ।

पार्वती शिवं उपगम्य प्रणमति । प्रणामावसरे विनम्रात् शिरसः नवकर्णिकारकुसुमं अधः स्रंसति । कर्णयोरलङ्कृतम् पल्लवमपि स्रस्तं भवति ।

15) उमाऽपि नीलालकमध्यशोभि विस्रंसयन्ती नवकर्णिकारम् ॥
चकार कर्णच्युतपल्लवेन मूर्ध्ना प्रणामं वृषभध्वजाय ॥

विस्रंसयन्ती= पातयन्ती । च्युत =स्रस्त । मूर्ध्ना= शिरसा ।

---

अथ भगवद्गीतायाः कश्चन भागः अध्ययनार्थमुद्ध्रियते ।

॥ श्रीमद् भगवद्गीतायां द्वादशोऽध्यायः । भक्तियोगः ।

अर्जुन उवाच ।

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥

श्रीभगवानुवाच ।

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥

संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ३ ॥

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि नचिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ ८ ॥

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनजय ॥ ९ ॥

अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥ १० ॥

अथैतदप्यशक्तोऽसि कर्तुम् मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥

श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद् ध्यानं विशिष्यते ।
ध्यानात्कर्मफलत्यगस्त्यागाच्छान्तिरनन्तरम् ॥१२ ॥

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥ १३ ॥

संतुष्टः सततम् योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ १४ ॥

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥

अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १३ ॥

यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः ॥ १७ ॥

समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः । ॥ १८ ॥

तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १९ ॥

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥

---

भगवद्गीतायां भक्तियोगस्य माहात्म्यं अस्मिन् द्वादशाध्याये भगवान् कृष्णः अर्जुनायोपदिशति । भक्तस्य लक्षणकथनमेवास्य पाठभागस्य सारांशः । 'युज' धातोः 'समाधिः', अर्थः । समाधिस्तु चित्तवृत्तिनिरोधः । युज + त = युक्त । एवं च अन्येभ्यो विषयेभ्यश्चित्तवृत्तिं निरुध्य एकस्मिन्नेव परमार्थे चित्तवृत्तिं संयोज्य ये वर्तन्ते ते एव युक्ताः इत्यर्थः । 'भज्' धातोः सेवार्थकस्य क्तप्रत्ययान्त एव भक्तशब्दः । सेवा नाम अनन्यशरणतया एकाश्रयबुद्धिः । तथा च अनन्यशरणत्वेन भगवन्तमेवैकाश्रयं मन्वाना एव भक्ताः । योगवित्तमाः = परमोत्कृष्टयोगयुक्ताः । अर्जुनः स्वसंशयच्छेतारं भगवन्तं पृच्छति 'तेषां के योगवित्तमाः?' इति । केचन साकारं अथवा सगुणं ईश्वरं भजन्ति, अन्ये केवल निराकारं अथवा निर्गुणं तं भजन्ति । तेषु के नाम परमोत्कृष्टा योगवेत्तारः? इति प्रश्नस्याशयः ।

भगवान् संशयं छिनत्ति—अन्येभ्यश्चित्तवृत्तिं निरुध्य साकारं भगवन्तमेव शरणं गता योगयुक्ता भक्ता भगवन्तं प्राप्नुवन्ति । भगवति सर्वमपि समर्प्य तदेकतानमनसो ये वर्तन्ते तान् स समुद्धरिष्यति । सगुणे परमात्मन्येकतानता असाध्या प्रतिभाति चेत् सा अभ्यासेन लभ्यते । अभ्यासोऽपि दुष्करश्चेत् सर्वाण्यपि कर्माणि भगवत्प्रीत्यर्थमेव कुर्यात् । तदप्यशक्यं चेत् कर्मफलत्यागः क्रियतां । तत एव मनसः शान्तिर्जायते । तदा एव स भक्तपदेन व्यवहर्तुं अर्हो भवति । तादृशानां भक्तानां लक्षणमेवं भवति :—

भक्तः सर्वभूतानि न द्वेष्टि, तैः सह स मैत्र्या करुणया च वर्तते। ममतारहितः अहङ्कारशून्यः स भक्तः सुखे दुःखे च समभावनः क्षमावान् च भवति। स सर्वथा सन्तुष्टः आत्मनियन्त्रणयुक्तः भगवति परमात्मनि समर्पितसर्वस्वश्च जायते। तादृशो भक्तो भगवतः प्रियो भवति। जनस्तस्माद् न बिभेति। यस्य न हर्षो, न शोको, नाभिलाषश्च विद्यते, यः शुभमशंभ वा कर्मफलं परित्यजति स भक्तो भगवतः प्रियो भवति। शत्रुर्मित्रं, मानोपमानः, शीतमुष्णं, सुखं, दुःखं इत्यादिषु द्वन्द्वेषु समभावन आसक्तिरहितो निन्दास्तुतिश्रवणे समचित्तः, येनकेनचित् सन्तुष्टश्च नरो भगवतः प्रिय एव। यश्चेदं वचनं आद्रियते तदनुसारमाचरति च, स श्रद्धावान् भगवदेकशरणो भक्तो भगवतः प्रियो जायते।

---

॥ अभ्यासः ॥

I पदानि विश्लेष्य लिखत।

1) भक्तास्त्वां। 2) चाप्यक्षरं। 3) मय्यावेश्य।
4) परयोपेतास्ते। 5) त्वक्षरं। 6) क्लेशोऽधिकतरस्तेषां।
7) मय्येव। 8) अभ्यासेऽप्यसमर्थोऽसि। 9) अथैदप्यशक्तोऽसि। 10 अनन्येनैव।

II पदानि सयोज्य संधिकार्याणि विवृणुत।

1) अभ्यासात्+ज्ञानात्। 2) त्यागः+त्यागात्+शान्तिः।
3) मयि+अर्पितमनस्+बुद्धिः+यः। 4) यस्मात्+न+उद्विजते। 5) भक्ताः+ते+अतीव।

III पाठालये नवागतं अध्यापकं अधिकृत्य पाठालयात् प्रतिनिवर्तमानैः द्वित्रैः बालकैः कृतं संवादं स्वभावनानुरूपं लिखत।

IV कुमारसंभवादुद्धृतानां पद्यानां सारं लिखत।

V भक्तस्य लक्षणं विशदयत।

VI एकादश द्वादशदिवसयोरावर्तनं कृत्वा सर्वे विषया दृढीक्रियन्ताम्।

---

# सप्तत्रिंशो दिवसः

॥ शाकुन्तले चतुर्थोऽङ्कः ॥

अथाद्य कालदासविरचितस्य शाकुन्तलनाटकस्य चतुर्थादङ्कात् कश्चन समाकर्षकं अंशं अध्यापयितुमारभे । अयमस्य नाटकस्य कथासंग्रहः ।

मुनेर्विश्वामित्रस्य अप्सरसि मेनकायां काचित् पुत्री अजायत । मेनका तां लतानिकुंजे परित्यज्य स्वर्गं गता । तदा काश्यपः कण्वः तस्य निकुंजस्य समीपतः समित्कुशादिकानाहर्तुम् गच्छन्नासीत् । निकुंजात् शिशोः रोदनं श्रुत्वा स तमभ्यगच्छत् । स तत्र शयानां क्रन्दन्तीं कांचन बालिकामपश्यत् । महर्षिस्तामादाय आश्रममनयत् । स तां 'शकुन्तलां' आजुहाव । सा अश्रमे अवर्धत । प्रियंवदा अनसूया चेति द्वे सख्यौ तस्या आस्ताम् । एवं षोडश सप्तदश वत्सरा अतीताः । ताः पूर्ण-यौवनं प्रापुः ।

तदन्तरे कण्वः कंचन कालं आश्रमे नासीत् । तदा राजा दुष्यन्तः आश्रमात् नातिदूरेषु काननेषु मृगयार्थं संचरन्नासीत् । वनाद्वनं संचरन् सः अकस्मात् आश्रमपरिसरं प्राविशत् । तदा ताः तिस्रो मुनिकन्यकाः आश्रमवाटिकासु वृक्षलताः सिञ्चन्त्यः अवर्तन्त । राजा वृक्षान्तरितः सन् ताः निपुणं निरैक्षत । तस्य तास्वन्यतमायां शकुन्तलायां प्रेमाऽजायत । परस्परदर्शनेन, सखीभ्यां तस्याः कथाश्रवणेन च तस्य सा रतिः पल्ल-विताऽभूत् । राजा तां गान्धर्वविधिना पर्यणयत् । स स्वनामांकित-मंगुलीयकं तस्यै दत्वा कतिपयैरेव दिवसैः तां राजधानीमानेष्यामीत्युक्त्वा स्वनगरीं गतः ।

शकुन्तला तु गर्भमदधात् । दुष्यन्तचिन्तया तस्याः मनः शून्य-मासीत् । तदन्तरा एकदा तस्यां आश्रमे आसीनायां, दुर्वासा मुनिः तेन पथा आजगाम । नाथैकतानहृदया सा तं नापश्यत् । स सुलभकोपो मुनिः स्वमवज्ञातं परिगणय्य तां शशाप; "त्वया ध्यायमानः पुरुषः न त्वां स्मरिष्यती" ति । सख्यौ तत् मुनेर्वचनं आकर्णयताम् । प्रियंवदा महर्षि-मनुधाव्य सान्त्वयित्वा शापमोक्षमयाचत । "अभिज्ञानदर्शनेन स तां स्मरिष्यती" ति कथयन् मुनिरन्तर्हितश्च । राज्ञा दत्तमंगुलीयकमस्तीति

मत्वा ते निश्चिन्ते अवर्तताम्। शकुन्तला तु तत्त्वतः इमं शापवृत्तान्तं नाजानात्।

कण्वः आश्रमम् प्रतिनिवृत्तः। वृद्धतापसी गौतमी इमां वार्ताम् तस्मै न्यवेदयत्। स शकुन्तलामभ्यनन्दत्। मुनिकुमाराभ्यां शाङ्गरवशारद्वताभ्यां गौतम्या च सह कण्वस्तां राजधानीं प्रेषयामास। मध्येमार्गं गङ्गायां स्नान्त्याः शकुन्तलायाः अंगुल्याः तदंगुलीयकं जलेऽपतत्। सा तदपि नाजानात्। सर्वे ते राजधानीं प्रापुः। राजा तान् यथाविधि सच्चकार। शापबलात् राजा शकुन्तलां न प्रत्यभिजानाति स्म। "शकुन्तला महिषीपदे स्वीक्रियता" मिति गौतमी राजानमभ्यर्थयत। तत्श्रुत्वा राजा तस्तंभ। स तां न सस्मार। अन्ते अभिज्ञानम् दर्शयितुं गौतमी शकुन्तलामाह। यदा सा अंगुलीं अपश्यत् तदा अंगुलीयकं न दृष्टम्। ते सर्वेऽपि मूढा अभवन्। राज्ञस्तु अविश्वासो दृढीभूतः। नियतमेव आरण्यकाः कामपि असत्यवार्तामाकलय्य मां वंचयितुमागताः" इति सः निरणयत्। शकुन्तला कठिनं रुरोद। अशरणा सा कामप्यभिज्ञानकथामकथयत्। तामपि राजा न स्मृतवान्। अन्ते मुनिकुमारावपि तां शशंकाते। ततः तौ गौतमी च तां तत्रैव पर्यत्यजन्। अन्ततः राजधान्याः स्वगृहं पुरोहितेनानीयमाना सा मध्येमार्गं मेनकया उद्ध्रियते स्म। मेनका तां मारीचाश्रममनयत्। सा तत्र सुखं वसन्ती कमपि तनयमसूत।

गङ्गास्रोतसि पतितं शकुन्तलायाः तदंगुलीयं केनचिद् धीवरेणाऽलभ्यत। तद् अन्ते राज्ञ एव हस्तं प्राप। अभिज्ञानांगुलीये दृष्टे सति राज्ञः शकुन्तलायाः स्मृतिरभवत्। स विदूषकेण सह विरहातुरः उद्याने दिनानि निनाय।

तत्रान्तरे देवासुराणां युद्धमभूत्। इन्द्रः स्वसाहाय्यार्थं दुष्यन्तं स्वर्गमानेतुं मातलिं प्रेषितवान्। मातलौ भुवमागते विरहातुरः स उद्याने आसीनो दृष्टः। तिरस्करिणीविद्यया स राज्ञि वीर्यमाधाय तेन सह दिवं गतः। समरे दैत्यान् निहत्य विमानेन प्रतिनिवर्तमानः स दुष्यन्तः अकस्मात् मारीचाश्रमे अवातरत्।

मुनेर्दर्शनावसरं प्रतीक्षमाणः स आश्रमपरिसरे अतिष्ठत्। तदा कश्चित् बालकः सिंहशिशुना सह क्रीडन् तत्रागतः। तेजस्विनो विक्रमिणश्च तस्य विचेष्टितानि भाषणानि च तमलितरामाचकृषुः। भाषणमन्तरा

शकुन्तलापि तत्रागता। ते परस्परं प्रत्यभिजानन्ति स्म। ततः मारिच-महर्षेः समक्षं शकुन्तलां सुतं च परिगृह्य स राजधानीं ययौ। अयं अत्र कथा-संक्षेपः।

---

अत्र अस्माभिः पठिष्यमाणस्य पाठभागस्यायं प्रसङ्गः। कण्वः गौतमीवचसा शकुन्तला गर्भवतीत्यजानात् तामभ्यनन्दच्च। ततः स मुनिः शार्ङ्गरवेण शारद्वतेन गौतम्या च सह तां भर्तृगृहं प्रेषयितुमैच्छत्। तावत्-पर्यन्तं परिचितानां प्रियजनानां वृक्षजातानां मृगाणां च वियोगः तस्या दुस्सह आसीत्। ते प्रतस्थिरे। कण्वः सख्यौ च किंचिद्दूरं तेषां सहयात्रां अकुर्वन्। तया सह स्निग्धं संभाष्य मुनिः आश्रमनिवर्तनकथां व्यस्मरत्। तदा शार्ङ्गरवः कण्वं प्रतिगमनार्थं अर्थयते।

शार्ङ्गरवः—भगवन्, उदकान्तं स्निग्धो जनोऽनुगन्तव्य इति श्रूयते। तदिदं सरस्तीरं। अत्र संदिश्य प्रतिगन्तुमर्हसि।

काश्यपः— तेन हीमां क्षीरवृक्षच्छायामाश्रयामः।

(सर्वे परिक्रम्य स्थिताः)

काश्यपः—(आत्मगतम्) किंनु खलु तत्रभवतो दुष्यन्तस्य युक्तरूप-मस्माभिः सन्देष्टव्यम्। (इति चिन्तयति)

शकुन्तला—(जनान्तिकम्) हला पश्य, नलिनीपत्रान्तरितमपि सहचरम-पश्यन्ती आतुरा चक्रवाक्यारौति दुष्करमहं करोमीति।

अनसूया—सखि मैवं मन्त्रयस्व।

---

उदकान्तं= सलिलपर्यन्तं। जलदर्शनावधि। अनुयात्रा जलदर्शना-वधि करणीया इति श्रूयते। संदिश्य= संदेशं दत्वा। प्रतिगन्तुमर्हसि= निवर्त-यस्व। क्षीरवृक्षः= सप्तपर्णः। हि+इमाम्।

आत्मगतं =रंगे अन्यैः न श्रोतव्यमित्यभिनीय, स्वयं कथनम्।

जनान्तिकम्= रंगे कांश्चन न श्रावयित्वा कैश्चन सह कथनम्। शकु-न्तला सरसि दत्तदृष्टिस्तिष्ठति। तदा नलिनीपत्रेण तिरोहितं स्वसहचर

पद्यम् 1) एषापि प्रियेण विना गमयति रजनीं विषाददीर्घतराम् ।
गुर्वपि विरहदुःखं आशाबन्धः साहयति ॥

कश्यपः—शाङ्गरव, इति त्वया मद्वचनात् स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः ।

शाङ्गरवः—आज्ञापयतु भवान् ।

काश्यपः—

पद्यम् 2) अस्मान् साधु विचिन्त्य संयमधनान्, उच्चैः कुलं चात्मनः
त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम् ।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतः परं, न खलु तद् वाच्यं वधूबन्धुभिः ॥

शाः—गृहीतः सन्देशः ।

काः—वत्से, त्वमिदानीमनुशासनीयासि । वनौकसोऽपि सन्तो लौकिकज्ञा वयम् ।

शाः—न खलु धीमतां कश्चिदविषयो नाम ।

काः—सा त्वमितः पतिकुलं प्राप्य,

---

चक्रवाकं अदृष्ट्वा क्रन्दन्तीं कांचित् चक्रवाकीं पश्यति । तदा स्वदशा-मुद्भावयन्ती सा वदति । हला =सखीनां संबोधनार्थं प्रयुज्यमानं अव्यय-पदम् ।

पद्यं 1 अनसूया सान्त्वयति—

एषा चक्रवाकी प्रियेण बिना विषादेन दीर्घतरां रजनीं गमयति, अर्थात् यथाकथंचित् यापयति । आशाबन्धः गुरु अपि विरहदुःखं साहयति । "प्रभाते पुनरपि सहचरेण संगच्छेयम्" इत्याशैव महत्तरमपि विरह-दुःखं सह्यं करोति । श्वः शुभं भवेदित्याशैव कठिनयातनानामपि सहने जन्तूनां शक्तिमुत्पादयतीत्यर्थः ।

मद्वचनात् = मद्वचनरूपेण । मम वचनं त्वं वद इत्युद्दिष्टोऽर्थः । त्वया स राजा वक्तव्यः= त्वं तं राजानं वदेः ।

प. 2 अन्वयः—संयमधनान् अस्मान्, आत्मनः उच्चैः कुलं च, त्वयि अस्याः कथमपि अबान्धवकृतां तां स्नेहप्रवृत्तिं च साधु

गद्य 3) शुश्रूषस्व गुरून्, कुरु प्रियसखीवृत्तिं सपत्नीजने,
भर्तृर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो, वामाः कुलस्याधयः ।

---

विनिमय त्वया दारेषु इयं सामान्यप्रतिपत्तिपूर्वकं दृश्या । अतः परं भाग्यायत्तं । तत् वधूबंधुभिः न वाच्यम् ।

साधु =सम्यक् । संयम एव धनं येषां ते । संयमः =मनोनियन्त्रणम् बान्धवैः कृता बान्धवकृता । न बान्धवकृता =अबान्धवकृता ।

काश्यपः शकुन्तलां कथयति । अनुशासनं =गुरुभिः शिष्येभ्यो यद् विधिरूपेण उपदिश्यते तत् । वनं ओकः येषां ते । ओकस्–भवनं । वनौकसः =वनवासिनः । वयं तापसाः वने वसाम इति सत्यमेव । तथापि लौकिकजीवितमधिकृत्य वयं सम्यक् ज्ञातार एवेत्यर्थः । न खलु अविषयः = विषय एव । बुद्धिमतां तु सर्वेऽपि बुद्धेः विषया भवन्ति । ते सर्वाण्यपि जानन्ति इत्यर्थः ।

प. 3) भर्तृगृहम् प्राप्य सहधर्मिण्या यद् आचरणीयं तत् कण्वः उपदिशति । गुरून्, वृद्धजनान् शुश्रूषस्व, तान् यथेष्टम् यथावसरं सेवस्व । सपत्नीजने भर्तुरितरासु पत्नीषु प्रियसखीवृत्तिं कुरु, प्रियसखी-सदृशमाचर । प्रियसखीर्निर्विशेषम् सपत्नीः गणय इत्यर्थः । भर्तुः रोषण-तया विप्रकृतापि प्रतीपम् मा स्म गमः । भर्ता कोपनशीलतया अपरा-द्धापि तस्य विरुद्धं मा वर्तस्व । भर्ता बहुकार्यव्यापृतत्वात् कदाचित् तुभ्यं कुप्येत्, तथापि तं कोपं अविगणय्य तेन सह सन्तुष्टचित्तया त्वया वर्ति-तव्यम्, न खल्वल्पबुद्धित्वात् तस्य प्रतिकूलतया भवितव्यम् । दक्षिणा = सर्वेषु समानममतायुक्ता । परिजने भूयिष्ठम् दक्षिणा भव । अन्तःपुर-परिचारकवृन्देषु प्रायशः समानस्नेहशीला भव । उत्सेकः =गर्वः । भाग्येषु अनुत्सेकिनी गर्वरहिता च भव । यदा अचिन्तितम् भाग्यमापतति तदा गर्विष्ठा मा भव । एवं युवतयो गृहिणीपदम् यान्ति । वामाः= विपरीताः । एतद्विपरीताः युवतयस्तु स्ववंशस्य नित्यदुःखम् भवन्ति । भर्तुरनिष्टं स्त्रियः स्वपितॄणां नित्यदुःखहेतवः स्युरित्याशयः ।

काश्यपः—कथम् वा गौतमी मन्यते ?

गौतमी—एतावान् वधूजनस्योपदेशः । जाते, एतत् सर्वमवधारय ।

काश्यपः—वत्से, परिष्वजस्व मां सखीजनम् च ।

शकुन्तला—तात, इत एव किं प्रियंवदामिश्राः सख्यो निवर्तिष्यन्ते?

काश्यपः—वत्से, इमे अपि प्रदेये । न युक्तमनयोस्तत्र गन्तुम् । त्वया सह गौतमी यास्यति ।

शकुन्तला—(पितरमाश्लिष्य) कथमिदानीं तातस्यांकात् परिभ्रष्टा मलयतटोन्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्ये?

काश्यपः—वत्से, किमेवम् कातरासि ?

4 अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला ।
तनयमचिरात् प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से शुचं गणयिष्यसि ॥

---

वधूनामुपदेशविषये मत्तोऽपि तवैवाधिकार इत्याशयः । (मद्+तः = मद्) वधूजनस्योपदेशः—वधूजनेभ्यः गुरुजनैर्दीयमान उपदेशः । जाते = वत्से । परिष्वजस्व =आलिंगनं कुरु । प्रियंवदामिश्राः =प्रियंवदाप्रभृतयः । प्रदेये =त्वमिव कस्मैचित् सौभाग्यवते प्रदातुमर्हे । तावत्पर्यन्तम् परगृहान् एते न गन्तुमर्हतः । इदानीं =इतःप्रभृति । बाल्यात् प्रभृति परिचितं प्रदेशं विहाय अपरिचिते प्रदेशे कथं जीवितं यापयामि । किमेवं कातरासि? = किमर्थमीदृशी भीरुता?

4) अभिजनवतः =कुलीनस्य । श्लाघ्ये =स्तुत्यर्हे । गृहिणी =भार्या । विभवगुरुभिः =महद्भिः सम्पद्राशिभिः गुरुत्वयुक्तैः । आकुला =व्यापृता, व्यग्रा । पावनं= परिशुद्धम् । शुचं =शोकं । प्राची+इव+अर्कम् ।

अन्वयः-अभिजनवतः भर्तुः श्लाघ्ये गृहिणीपदे स्थिता तस्य विभव-गुरुभिः कृत्यैः प्रतिक्षणं आकुला अचिरात् प्राची अर्कम् इव पावनं तनयं प्रसूय, हे वत्से, त्वं मम विरहजां शुचं न गणयिष्यसि ।

(शकुन्तला पितुः पादयोः पतति)

काश्यपः—यदिच्छामि, ते तदस्तु ।

शकुन्तला—(सख्यावुपेत्य) हला, द्वे अपि मां सममेव परिष्वजेथाम् ।

सख्यौ—(तथा कृत्वा) सखि, यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत् ततस्तस्येदमात्मनामांकितमंगुलीयकं दर्शय ।

शकुन्तला—अनेन सन्देहेन वामाकम्पितास्मि ।

सख्यौ—मा भैषीः । स्नेहः पापशंकी ।

शा:—युगान्तरमारूढः सविता । त्वरतामत्रभवती ।

शकु:—(आश्रमाभिमुखी स्थित्वा) तात, कदा नु भूयस्तपोवनं प्रेक्षिष्ये ।

काश्यः—श्रूयताम् ।

---

कुलीनस्य भर्तुः श्लाघनीये पत्नीपदे स्थित्वा, तस्य सम्पदः समृध्या गुरुत्वयुक्तानां कर्मणां यथाशक्ति साहाय्यप्रदाने व्यापृता भूत्वा, पूर्वा दिक् अरुणमिव वंशविशुद्धये पर्याप्तं पुत्रं प्रसूय च क्रमशः मद्विरहोद्भवं दुःखं त्वं न परिगणयिष्यसि । मद्विषयकं दुःखं त्वं विस्मरिष्यसि इत्यर्थः ।

सममेव =युगपद्, समकाले, न एकैकशः । परिष्वजेथाम् =आलिंगतम् । प्रत्यभिज्ञानमन्थरः =स्मरणे मन्दः, (त्वां स्मर्तुम् स न शक्नोति चेत् । ततः+तस्य+इदं+आत्मनामाङ्कितं-अङ्गुलीयकं । वां अनेन संदेहेन आकम्पितास्मि । वां =युवयोः

मा भैषीः =मा भीता भव । यत्र यत्र स्नेहस्तत्र तत्र पापस्य अनभिलषणीयस्य कस्यापि आपातो भवति । अयं लोकस्वभावः । मा खल्वन्यथा चिन्तय ।

युगान्तरं =युगप्रमाणं अन्तरम् । युगप्रमाणपरिमितं दूरम् । युगः =कर्षणार्थं वृषभाणां गलेषु बध्यमानो दारुदण्डः । सविता= सूर्यः । संभाषणमन्तरा समयोऽतिक्रान्तः । सविता= सूर्यः । उदयगिरेः किंचिद्दूरं आकाशमारूढ इत्यर्थः । अत्रभवती, तत्रभवती, अत्रभवान्, तत्रभवान् इत्यादयो नाटकादिषु 'त्वम्' इत्यर्थे आदरार्थे प्रयुज्यन्ते । त्वरंताम्= शीघ्रं गमनाय सज्जा भवतं इत्याशयः ।

5 भूत्वा चिराय चतुरन्तमहीसपत्नी
दौष्यन्तिमप्रतिरथं तनयं निवेश्य ।
भर्त्रा तदर्पितकुटुम्बभरेण सार्धं
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥

गौतमी— जाते, परिहीयते गमनवेला । निवर्तय पितरम् । अथवा चिरेणापि पुनः पुनरेषैवं मन्त्रयिष्यते । निवर्ततां भवान्

का— उपरुध्यते तपोनुष्ठानम् ।

शकु—(भूयः पितरमाश्लिष्य) तपश्चरणपीडितं तातशरीरम् । तन्मातिमात्रं मम कृते उत्कण्ठितुम् ।

का—(सनिःश्वासम्)

---

तावत् कालं परिचितमासक्तं च तपोवनं परित्यक्तुं तया महान् क्लेशोऽनुभूयते । अधुना परित्यक्तमेव भवेत्, उत पुनर्दर्शनायावसरं लभेय इति बुद्ध्या पृच्छति । "तात कदा...." इति

5) तस्य प्रश्नस्योत्तरं काश्यपो ददाति "भूत्वा..." इति । तव भर्तुः द्वे महिष्यौ स्तः । एका चतुस्समुद्रमेखला भूमिः । अन्या त्वं च । एवं चिरं चतुस्समुद्रमेखलायाः भूमेः सपत्नी भविष्यसि । तथाविधा त्वं अतुल्यबलं कंचन पुत्रं च प्रसोष्यसे । यदा स राज्यभरणक्षमं वयः प्राप्नोति तदा तस्मिन् समर्पितराज्यभारेण भर्त्रा सह त्वं पुनरपि अस्मिन् आश्रमे पदं करिष्यसि ।

अन्वयः—चिराय चतुरन्तमहीसपत्नी भूत्वा अप्रतिरथं दौष्यन्तिं तनयं निवेश्य तदर्पितकुटुम्बभरेण सार्धं हे शान्ते त्वं अस्मिन् आश्रमे पुनः पदं करिष्यसि

शान्ते इति पदं आश्रमे इत्यस्य विशेषणत्वेनापि योज्यम् । परि-हीयते =क्षीयते । गमनवेला परिहीयते =गमनवेला अतिक्रामति इति सारः । उपरुध्यते =प्रतिबध्यते ।

तव+मा+अतिमात्रं । कृते इत्यव्ययं षष्ठ्यन्तेन पदेन सह चतुर्थ्यर्थे प्रयुज्यते । मम कृते =मदर्थं, मह्यं । रामस्य कृते =रामाय । फलानां कृते= फलेभ्यः ।

मा उत्कण्ठितुम् =मा उत्कण्ठां कार्षीः । मा उत्कण्ठिता भव ।

6 शममेष्यति मम शोकः कथं नु वत्से त्वया रचितपूर्वम् ।
उटजद्वारविरूढं नीवारबलिं विलोकयतः ॥

गच्छ । शिवास्ते पन्थानः सन्तु ।

(निष्क्रान्ता शकुन्तला सहयायिनश्च)

सख्यौ— (शकुन्तलां विलोक्य) हा धिक्! अन्तर्हिता शकुन्तला वनराज्या ।

काश्यपः—(सनिःश्वासम्) अनसूये, गतवती वां सहधर्मचारिणी ।
निगृह्य शोकमनुगच्छतं मां प्रस्थितम् ।

उभे—तात, शकुन्तलाविरहितं शून्यमिव तपोवनं कथं प्रविशामः ।

का—स्नेहप्रवृत्तिरेवंदर्शिनी । (सविमर्शं परिक्रम्य) हन्त भोः!
शकुन्तलां पतिकुलं विसृज्य लब्धमिदानीं स्वास्थ्यम् । कुतः,

7 अर्थो हि कन्या परकीय एव तामद्य संप्रेष्य परिग्रहीतुः ।
जातो ममायं विशदः प्रकामं प्रत्यर्पितन्यास इवान्तरात्मा ॥

(इति निष्क्रान्ताः सर्वे)

चतुर्थोऽङ्कः समाप्तः

---

6 दुःखमसहमानः कण्वो निश्वसिति । ततः कथयति । वत्से, मम शोकः कथं शाम्यति? आश्रमदेवताभ्यस्त्वं नीवारबलिं पूर्वम् अदाः । बलिरूपतया दत्ताः ते नीवारकणाः इतस्ततो विकीर्णा आसन् । ते तत्रैव स्थिताः विरूढाश्चासन् । यदाहं निवर्तिष्ये तदा तेषामंकुराणां निचये मम दृष्टिर्निपतिष्यति । तेषां दर्शनेन मम शोको न शान्तो भविष्यति, प्रत्युत वर्द्धिष्यत एव ।

अन्वयः—वत्से, त्वया रचितपूर्वं उटजद्वारविरूढं नीवारबलिं विलोकयतः मम शोकः कथं नु शममेष्यति? नु, ननु नाम, किम्, खलु इत्यादयः शब्दाः अर्थव्यक्त्यर्थं प्रयुज्यन्ते । हा, धिक् = कष्टम् । हन्त हन्त! अन्तर्हिता = तिरोहिता । वनराज्या = वनपटलेन । निगृह्य = नियम्य । शोकं निगृह्य प्रस्थितं मां अनुगच्छतम् ।

स्नेहप्रवृत्तिः स्नेहस्यान्तःप्रवर्तनं । यत्र स्नेहोऽस्ति शून्यमपि सर्वं पूर्णं प्रतिभाति । यत्र स्नेहो नास्ति तत्र पूर्णमपि सर्वं शून्यमिव प्रतिभाति । मनः स्वास्थ्यलाभस्य हेतुं कथयति ।

7) कन्या नाम धनं पितुरन्तिके न्यासतया रक्षार्थं निक्षिप्तमास्ते। तद् धनं तु परकीयमेव। तद् अधुना तस्य स्वामिने एव प्रत्ययच्छम्। अतो ममान्तरात्मा अधुना शान्तोत्कण्ठः शान्तशंको विगतभारश्च जातः।

अन्वयः—कन्या परकीयः अर्थ एव हि। तां अद्य परिग्रहीतुः सम्प्रेष्य प्रत्यर्पितन्यास इव मम अयमन्तरात्मा प्रकामं विशदः जातः।

---

॥ अभ्यासः ॥

I सप्तम्याः स्थाने 'यदा...तदा' प्रयुज्यताम्।

1) सुधांशौ सुरां विकरति को मनस्वी न पिबेत्।
2) तारकासु नभसि प्रकाशमानासु सरसि कुमुदानि लसन्ति।
3) रामलक्ष्मणयोः वने वसतोः शूर्पणखा तौ अभ्यगच्छत्।
4) बालिकासु पाठशालायां पाठन्तीषु बालकाः क्रीडन्ति।

II रूपाणि लिखत। यथा—माता, जाता, (तृ. ए.) मात्रा, जातया

1) तेजस्वी, पार्वती (षष्ठी.ए) 2) हरिः, प्रीतिः (च. ए.) 3धनी, मुनिः (ष.ब.) 4) बुद्धिमत्, मरुत् (प्र.ए.) 5) शिला, दिश् (स. ब) 6) सुता, माता (प्र. ब.) 7) पिता, लता (स. ए) 8) राजा, प्रजा (च.ए) 9) वेधस्, ब्रह्मन् (तृ. ब.) 10) मनस्, वाच्, (ष. ब.)

III शाकुन्तलकथासंक्षेपमनुवदत।

IV त्रयोदश चतुर्दशदिवसयोः पठितानां विषयाणां आवर्तनं कृत्वा, दृढीकुरुत।

V मयात्र 'अस्मात् साधु' 'शुश्रूषस्व गुरून्' इति पद्यद्वयं विस्तरेण व्याख्यायते। तत् सम्यक् पठित्वा तदान्यस्मात् ग्रन्थचतुष्कात् पुस्तकाभिरुद्धतम पद्यद्वयं स्वभावनानुरूपं यथाशक्ति व्याख्यायताम्।

अस्मिन् दिने वयं कण्वाश्रमं प्रविष्टाः स्मः। सप्त कथापात्राणि अस्माकं पुरस्तात् तपोवनेन गच्छन्ति। अग्रे मुनिकुमारौ, तत्पश्चाद् गौतमी, ततः काश्यपः शकुन्तला च, अन्ततः सख्यौ इत्ययं स्यात् तेषां प्रयाणक्रमः। शकुन्तलाविषयकचिन्तया कण्वः सख्यौ च कियद्दूरं गता इति नाजानत। आश्रमे बहुदूरं पश्चात्कृते, ते कस्यचित् सरसः समीपमापुः 'अपो दृष्ट्वा निवर्तयेत्' इति यात्रासमये प्राचीनैरंगीकृतप्रमाण आचारः खलु। तत् स्मृत्वा तात-

काश्यपं निवर्तयितुकामः शाङ्गरवः प्राह। 'तात, वयमत्र सरस्तीरं प्रविष्टाः स्मः। सलिलदर्शनावधि अनुयात्रा करणीयेति श्रुतं च। अतोऽस्मात् निवर्त्य प्रतिष्ठस्व' इति।

"राज्ञे किमपि सन्देष्टव्यम्। तदधिकृत्य तावत्पर्यन्तं न किमपि विचिन्तितम्। अधुना तु कुत्रचित् स्थित्वा सन्देशो निबन्धनीयः"। इति मत्वा काश्यपः मार्गस्य पार्श्वे स्थितस्य कस्यचित् क्षीरवृक्षस्य छायायां निविष्टः। कण्वः सन्देशनिबन्धनायैकाग्रचित्तो बभूव। तदा शकुन्तला पुरस्तात् दृश्यमाने सरसि कामपि दीनां चक्रवाकीमैक्षत। सा चक्रवाकी स्वसहचरं अपश्यन्ती करुणं क्रन्दन्ती अवर्तत। तस्याः सहचरस्तु नलिनीपत्रेण क्षणमात्रमन्तर्हितः किलाऽऽसीत्। सा चक्रवाकी स्वसहचरस्य क्षणिकमप्यदर्शनं नासहत। तस्या रोदनं शकुन्तलाहृदये प्रधूमितं विरहाग्निं प्रज्वालयामास। शकुन्तला तां सख्यौ प्रादर्शयच्च। अतः शकुन्तलाया हृदि विरहाग्निं प्रदीप्तमालक्ष्य अनसूया एवं सान्त्वयामास। यैषा अधुना क्षणविरहेणापि रोदिति सैव चक्रवाकी सुदीर्घां रात्रिं विरहयातनां सहमाना यापयति। कथम्? तस्याः प्रियसमागमे प्रत्याशाऽस्ति। 'श्वः प्रभाते प्रियतमं प्रेक्षितुं प्रभवाम्येव।" इयमाशैव तादृशीं विरहवेदनां सह्यां करोति।

एवमेकत्र तासु भाषमाणासु अन्यत्र कण्वः सन्देशं निबध्नन् अवर्तत। स तदानीं शाङ्गरवमाहूय सन्देशमादिशत्। अयमस्यार्थः।

"वयं खलु संयमधनाः, नास्माकमन्यत् किमपि धनमस्ति। भवन्तस्तु मर्यादां शिखरे तिष्ठन्ति। कुलं च भवतामत्युन्नतम्। इयं तु मम सुता त्वयि विश्वासात् एवं किमपि कृतवती। परिणयविधौ तु न तस्य बान्धवाः संबद्धाः। सेयं भवता साधारणस्नेहेनानुग्रहीतव्या यथा भवतो भार्याः पत्न्यः। इयत्येवास्माकमाशा। अतः परं यत्किंचित् सौभाग्यं लभ्यते तत् भाग्यायत्तमेव। तदधिकृत्य बान्धवैः न वक्तव्यमस्ति। सन्देशपत्रं यदि वयं विनीतस्वरेण पठामः तर्हि एवं विधोऽर्थः सिध्यति तदेव पत्रं धीरस्वरेण पठ्यते चेत् अस्माद् विभिन्नः कश्चिदन्योऽर्थः उषःप्रकाश इवाविर्भवति। अयं द्वितीयोऽर्थः—

"त्वं सम्यक् चिन्तय वयं संयमधनाः खलु। न यूयमिव नश्वरधनमत्ताः। यदि वयमवमन्येमहि तर्हि तव साम्राज्यमपि भस्मसात्कर्तुम् वयं

प्रभवेम। अथ च त्वया इदमपि सम्यगालोचनीयं यत् तव कुलमस्मिन् विषये प्रसिद्धमिति। तत्र पूर्विकेभ्य आरभ्य या यास्तरुण्यो दृष्टिपथमापतन्ति तास्ताः परिणीयन्ते भुज्यन्ते च। किञ्चायं परिणयस्तु अस्माभिर्बान्धवैर्न ज्ञातः। अस्मदनुमतिः परिणये नापेक्षिता च। अतोऽस्य कर्मण उत्तरदातृत्वं त्वय्येव निक्षिप्तम्। तस्मात् सेयं शकुन्तला तव पत्नीजनेषु मान्यप्रतिपत्तिपूर्वकं परिगणनीया। तवान्तःपुरे सहस्रशः कुचकचवत्यो जन्तवः स्युः। मा खल्वेनां तास्वन्यतमां गणय। इयं सा मान्यप्रतिपत्तिपूर्वमेव द्रष्टव्या। अतः परं भाग्यायत्तमेव। तदस्माभिर्न वाच्यम्।' आद्यार्थे 'सामान्यप्रतिपत्तिरि'ति पदच्छेदः द्वितीये तु सा मान्यप्रतिपत्तिरिति च।

शाङ्र्गरवमेवं संदिश्य तातकाश्यपः शकुन्तलां शास्ति स्म। 'अयि वत्से त्वया इतः पर्यन्तं आरण्यकानां जीवितमेव नीतम्। विवाहजीवित कलापि ते न परिचिता। इतः पर्यन्तं त्वं मुनिकन्यकाऽसीः। अधुना त्वं राजधान्यां पट्टमहिषीपदमलंकरिष्यसि च। तव ते करणीयानि मयोपदेष्टव्यानि। राजकुले वृद्धाः श्वशुरादयः स्युः। तान् यथावसरं शुश्रूषस्व। अन्तःपुरे अंगनानां बाहुल्यमपि विद्येत। तासामग्रे "अहं नवागता युवतिः, मम भर्तुरहमेव प्रियतमा। किं युष्माभिः मम भर्तुः प्रयोजनम्?" इत्येवं यदि त्वया स्वामिनीभावोऽभिनीयेत तर्हि सर्वमपि सौभाग्यं नष्टं स्यादेव। अथ च तव भर्ता सार्वभौमः कार्यशतव्यापृतः स्यात्। कदाचिदन्यविषयकेण चित्तविक्षोभेण तुभ्यमपि कुप्येत् तथापि तस्य प्रतिकूला मा स्म भूः। तेन सह यथानुकूल्यं वर्तेथाः। अन्योऽप्यस्ति श्रद्धेयो विषयः। परिचारकजनाः प्रायशोऽल्पबुद्धयश्च स्युः। तेषु त्वया समानभावया भवितव्यम्। केषुचिदतिप्रीतिः केषुचिदल्पप्रीतिश्च प्रकटयेस्तर्हि ते सासूयाः सम्पद्येरन्। ततस्तेषां विद्वेषपात्रं च स्याः। अथान्यत् च। नीवारान्नमश्नन्त्यास्ते मृष्टान्नं लप्स्यते। स्थण्डिले शयानायास्ते पट्टांबरालंकृतः पर्यङ्कश्च। लंबकूर्चैस्तापसकुमारैस्सहोषितायास्ते राजसप्रभावाणां जनानां सहवासश्च लभ्येत। तदा त्वया गर्विष्ठया च न भवितव्यम्। एवमेव युवतयो गृहिणीपदं सौभाग्यपूर्णं कुर्वन्ति। एतद्विपरीतास्तु स्ववंशं नित्यदुःखैः नरकं तन्वन्ति॥

---

# अष्टात्रिंशो दिवसः

(सौन्दर्यलहरी)

अद्य श्रीशङ्कराचार्य विरचितायाः सौन्दर्यलहर्याः श्लोकशतात् कतिचन श्लोका अत्र अध्ययनार्थमुद्ध्रियन्ते। अस्याकर्षकं किमपि काव्यं तथैव भक्तिसम्बन्धं किमपि स्तोत्रं चेति द्वेधा अस्य ग्रन्थस्य महत्त्वमनितरसाधारणमेव। सर्वोपरि अस्य काव्यस्य रचनावैशिष्ट्याद् उद्भूता गानात्मकता गायकानप्याकर्षति। तत्र प्रथमः श्लोकः—

शिवः शक्त्या युक्तो यदि, भवति शक्तः प्रभवितुं
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि।
अतस्त्वामाराध्यां हरिहरविरिञ्चादिभिरपि
प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति॥

अन्वयः—यदि शिवः शक्त्या युक्तः (तर्हि) प्रभवितुं शक्तः भवति। एवं न चेद् देवः स्पन्दितुमपि कुशलः न (भवति) खलु। अतः हरिहरविरिञ्चादिभिः अपि आराध्यां त्वां प्रणन्तुं स्तोतुं वा अकृतपुण्यः (नरः) कथम् प्रभवति।

सारः—परमात्मस्वरूपः शिवः यदि शक्तिस्वरूपिण्या भवान्या युक्तः तर्ह्येव प्रपञ्चं स्रष्टुं शक्तः भवति। एवं न चेत् अर्थात् शक्त्या विहीनश्चेत्तु, केवलं स्पन्दितुमपि समर्थः न स्यात्। अतः अर्थात् परमात्मनोऽपि शक्तिदायिनीति हेतोः ब्रह्मविष्णुमहेश्वरादिभिरपि आराधनीयां त्वां, यो न पुण्यं कृतवान् स कथं त्वत्सकाशमागत्य प्रणन्तुं अथवा दूरे स्थित्वा स्तोतुं शक्तः स्यात्?।

देव्याः चरणकमलरजसां महत्त्वं प्रस्तूयते—

तनीयांसं पांसुं तव चरणपङ्केरुहभवं
विरिञ्चिः सञ्चिन्वन् विरचयति लोकानविकलम्।
वहत्येनं शौरिः कथमपि सहस्रेण शिरसां
हरः संक्षुद्यैनं भजति भसितोद्धूलनविधिम्॥

तनीयांसं (तनु+ईयस्, तद्धितान्तः) अल्पीयांसं। पांसुः=परागः। विरिञ्चिः=ब्रह्मा। सञ्चिन्वन्=सञ्चयनं कुर्वन्। अविकलं=पूर्णं। शौरिः=विष्णुः।

हरः= शिवः। संक्षुद्य =संचूर्ण्य । भसितोद्धूलनविधिं=भस्मलेपनं ।

सारः- हे देवि, ब्रह्मा तव पादपरागेण प्रपञ्चं सृजति । विष्णुः स्वशिरः-सहस्रेण तं परागकणं अतिक्लेशेन वहति । शिवः तं सञ्चूर्ण्य भस्मालेपं करोति ।

अथ शक्तिस्वरूपिणी देवी अज्ञान् अभिज्ञान् तनोति, जडान् चेतनान् करोति, दरिद्रान् सम्पन्नान् कलयति, सांसारिकक्लेशविवशान् तस्माद् उद्धरति इति कथ्यते-

अविद्यानामन्तस्तिमिरमिहिरोद्दीपनकरी
जडानां चैतन्यस्तवकमकरन्दस्रुतिझरी ।
दरिद्राणां चिन्तामणि गुणनिका जन्मजलधौ
निमग्नानां दंष्ट्रा मुररिपुवराहस्य भवती ॥

अविद्यानां= अज्ञानिनां । अन्तस्तिमिरमिहिरोद्दीपनकरी =मनसः अन्धकारस्य (दूरीकरणाय) यः ज्ञानरूपः मिहिरः आवश्यकः तस्य उद्दीपनकरी उद्दीपिका ("अन्तस्तिमिरमिहिरद्वीपनगरी" इति प्रचुरप्रचारः पाठः प्रामादिक इति अन्ये) चैतन्यरूपाद् पुष्पगुच्छाद् उद्गलन्ती मधुप्रवाहधारा । चिन्तामणि माला । जन्म...भवती= यथा विष्णुः पुरा वराहो भूत्वा समुद्रमग्नां भूमिं उदधरत् तथैव देवी संसारसागरे निमग्नान् जनानुद्धरति । मिहिरः =सूर्यः

इतरे देवाः कराभ्यां अभीष्टं ददति । किन्तु केवलं तव चरणद्वयं ततोऽप्य-धिकमभीष्टं वितरतीति विशदयति चतुर्थं पद्यम्-

त्वदन्यः पाणिभ्यामभयवरदो दैवतगण-
स्त्वमेका नैवासीः प्रकिटतवराभीत्यभिनया ।
भयात् त्रातुं दातुं फलमपिच वाञ्छासमधिकं
शरण्ये लोकानां तव हि चरणावेव निपुणौ ॥

अन्वयः—लोकानां शरण्ये हे देवि, त्वदन्यः दैवतगणः पाणिभ्यां अभय-वरदः। त्वं एका प्रकटितवराभीत्यभिनया नैव आसीः । भयात् त्रातुं वाञ्छासमधिकं फलं दातुं च तव चरणौ एव निपुणौ भवतः। अभयं वरं च ददाति इति अभयवरदः । वर+अभीति+अभिनया ।

देव्याः प्रसादः स्वतः शान्तरसप्रधानान् शृङ्गारविरसानपि जनान् विकारविक्षुब्धान् कर्तुम् प्रभवति इति कथयति पञ्चमेन पद्येन—

हरिस्त्वामाराध्य प्रणतजनसौभाग्यजननीं
पुरा नारीभूत्वा पुररिपुमपि क्षोभमनयत् ।
स्मरोपि त्वां नत्वा रतिनयनलेह्येन वपुषा
मुनीनामप्यन्तः प्रभवति हि मोहाय महताम् ।

अन्वयः-(हे देवि) पुरा हरिः प्रणतजनसौभाग्यजननीं त्वां आराध्य नारी भूत्वा पुररिपुमपि क्षोभं अनयत । स्मरः अपि त्वां नत्वा रतिनयनलेह्येन वपुषा महतां मुनीनां अपि अन्तः मोहाय प्रभवति ।

लेह्येन =आस्वाद्येन । वपुषा =शरीरेण ।

अथ अनङ्गः कामदेवः सामग्रीणामल्पत्वेऽपि तव कारुण्यादेव इमं प्रपञ्चं वजेतुं शक्नोतीति समर्थयति षष्ठेन पद्येन ।

धनुः पौष्पं मौर्वी मधुकरमयी पञ्च विशिखाः
वसन्तः सामन्तो मलयमरुदायोधनरथः ।
तथाप्येकः सर्वम् हिमगिरिसुते कामपि कृपा-
मपाङ्गात्ते लब्ध्वा जगदिदमनङ्गो विजयते ॥

सारः—हे हिमगिरिसुते ते अपाङ्गात् अर्थात् कटाक्षात् अनिर्वचनीयां तां कृपामुपलभ्य कामदेवः इदं भुवनं विजयते । स कामदेवः स्वतो दुर्बलः । तस्य धनुः पुष्पमयम् । मधुपमालैव तस्य मौर्वी । अस्त्राणि पञ्च कुसुमानि । वसन्तः सहायः । मलयानिलः रथः । तथापि स त्वत्कृपया लोकं जयति ।

अथ सौन्दर्यलहर्याः इतस्ततः कतिचन श्लोकान् आस्वादनार्थम् निर्धार्य विवरीतुमुत्सहे । देव्याः कुन्तलवर्णनं त्रयश्चत्वारिंशेन पद्येन क्रियते ।

धुनोतु ध्वान्तं नस्तुलितदलितेन्दीवरवनं
घनस्निग्धश्लक्ष्णं चिकुरनिकुरुम्बं तव शिवे ।
यदीयं सौरभ्यं सहजमुपलब्धुं सुमनसो
वसन्त्यस्मिन् मन्ये वलमथन वाटीविटपिनाम् ।

धुनोतु= दूरीकरोतु । ध्वान्तं नः =अस्माकं । अन्धकारं =अज्ञानं । चिकुरनिकुरुम्बं =वेणीभारः । सुमनसः =पुष्पाणि । वलमथनवाटी= नदनवनम् । तुलित.......वनं= विकसितेन्दीवर कुसुमगणसमानम् ।

अन्वयः— हे शिवे, तुलितदलितेन्दीवरवनं घनस्निग्धश्लक्ष्णं तव चिकुरनिकुरुम्बं नः ध्वान्तं धुनोतु । यदीयं सौरभ्यं उपलब्धुं बलमथनवाटीविटपिनां सुमनसः अस्मिन् वसन्ति इत्यहं मन्ये।

देव्याः सीमन्तरेखां वर्णयति चतुश्चत्वारिंशेन पद्येन—

तनोतु क्षेमं नस्तव वदनसौन्दर्यलहरी-
परीवाहस्रोतस्सरणिरिव सीमन्तसरणिः ।
वहन्ती सिन्दूरं प्रबलकबरीभारतिमिर-
द्विषां बृन्दैर्बन्दीकृतमिव नवीनार्ककिरणम् ॥

सारः—हे देवि तव सीमन्तरेखा अस्माकं क्षेमं तनोतु । सीमन्तो नाम द्विधा विभक्तस्य केशभारस्य मध्ये दृश्यमाना रेखा यां पतिव्रताः सिन्दूर रेणुभिः प्रसाधयन्ति । सेयं रेखा अतिशक्तानां तस्याः केशभारतमोरूपाणां शत्रूणां समूहैः बन्दीकृतः सूर्यकिरण इव दृश्यते । कबरी =केशः । द्विषः = शत्रवः । बन्दी =बन्धनस्थः ।

देव्याः अलकरुचिरं वदनं वर्णयति पञ्चचत्वारिंशेन-

अरालैः स्वाभाव्यादलिकलभसश्रीभिरलकैः
परीतं ते वक्त्रं परिहसति पङ्केरुहरुचिम् ।
दरस्मेरे यस्मिन् दशनरुचिकिञ्जल्करुचिरे
सुगन्धौ माद्यन्ति स्मरदहनचक्षुर्मधुलिहः ।

सारः—स्वभावत एव वक्रैः तरुणभ्रमरसदृशैरलकैः विसृमरं तव वदनं पङ्कजशोभां परिहसति । तस्य मुखस्याग्रे कमलकान्तिः विकला भवति । किञ्च स्मयमाने सुरभिले दन्तशोभारूपकिञ्जल्कैर्मनोहरे तस्मिन् वक्त्रे शिवस्य नेत्रभ्रमराः मदमाप्नुवन्ति । तव वदनं दृष्ट्वा शिवस्य नेत्रत्रयं मदिरापानेनेव माद्यति इति सारः । किञ्जल्कः =केसरः ।

देव्याः अर्धचन्द्राकृति ललाटं किरीटे विराजमानं अर्धचन्द्रं च विपरीतं विन्यस्य विरचित एव पूर्णचन्द्र इति उद्भाव्यते षट्चत्वारिंशेन पद्येन ।

ललाटं लावण्यद्युति विमलमाभाति तव यद्
द्वितीयं तन्मन्ये मकुटघटितं चन्द्रशकलम् ।
विपर्यासन्यासादुभयमपि संभूय च मिथः
सुधालेपस्यूतिः परिणमति राकाहिमकरः ॥

अन्वयः–यद् तव लावण्यद्युति विमलं च आभाति तद् ललाटं मकुटघटितं द्वितीयं चन्द्रशकलमिति मन्ये। एतदुभयमपि विपर्यासन्यासात् मिथः संभूय सुधालेपस्यूतिः राकाहिमकरः परिणमति।

विपर्यासन्यासात्=किरीटघटितं ऊर्ध्वमुखं चन्द्रशकलं अधोमुखं तथा अधोमुखं ललाटं ऊर्ध्वमुखं च विन्यस्य। राका=पौर्णमी।

देव्याः मधुरस्वरः वाणीदेव्याः वीणाया अपि लज्जामातनुते इति सूचयति षट्षष्टितमं पद्यम्।

विपञ्च्या गायन्ती विविधमपदानं पशुपतेः
त्वयारब्धे वक्तुं चलितशिरसा साधुवचने।
तदीयैर्माधुर्यैरपलपिततन्त्रीकलरवां
निजां वीणां वाणी निचुलयति चोलेन निभृतम्॥

सारः–वीणापाणिः वाणीदेवी देव्याः समक्षं स्थित्वा शिवप्रशंसारूपं गानमालपति। तद् श्रुत्वा देवी साधु साधु (very good very good) इति सरस्वतीं अभिनन्दति। तथा देव्याः तत् स्वनं श्रुत्वा वाणी मम वीणाया अपि मधुरोऽयं स्वनः इति बुद्ध्वा लज्जिता भूत्वा स्वां वीणां अच्छाद्य मन्दमन्द-मपक्रामति।

अथ द्व्यशीतितमं पद्यम्–

करीन्द्राणां शुण्डान् कनककदलीकाण्डपटली-
मुभाभ्यामूरुभ्यामुभयमपि निर्जित्य भवती।
सुवृत्ताभ्यां पत्युः प्रणतिकठिनाभ्यां गिरिसुते
विजिग्ये जानुभ्यां विबुधकरिकुंभद्वयमपि॥

अस्यार्थग्रहणे न क्लेशोऽस्ति। देवी करिशुण्डान् कदलीकाण्डानपि ऊरुभ्यां निर्जितवती। ततः जानुद्वयेन करिकुंभानपि जिगाय। अत्र "विधिज्ञे जानुभ्यां" इत्येव मुद्रितेषु पुस्तकेषु दृश्यते। प्रामाणिका अपि तमेव पाठमनुवर्तन्ते। "विजिग्ये जानुभ्यां" इत्येव शुद्धः पाठः, यतः अत्र उत्तरार्धे विजितवती इत्यर्थे कापि क्रिया आवश्यकी। तत्र 'विजिग्ये इत्येतया क्रियया भाव्यम्। विजिग्ये विजिग्याते विजिग्यिरे इति 'वि' पूर्वक 'जि' धातोः लिटि आत्मने पदरूपम्।

अथात्र स्तोत्रकाव्ये अन्तिमं पद्यम्। अस्याचार्यकवेः अहन्ताराहित्यं

अर्पणबुद्धिं च वयमस्मात् पद्यादवगच्छामः ।

प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः
सुधासूतेश्चन्द्रोपल जललवैरर्घ्यरचना ।
स्वकीयैरम्भोभिस्सलिलनिधिसौहित्यकरणं
त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियम् ॥

सारः—कवेरस्य जगदंबिकां प्रणन्तुं स्तोतुं वा या प्रतिभा लब्धा सा तस्या एवांशः । अतः तस्याः प्रतिभाया उत्पन्ना इमा वाचोऽपि तस्यै एव समर्पणीयाः इति समर्थयति । भगवतः सूर्यस्यैवांशः खलु दीपनालः । तेन सायं तस्यैव सूर्यस्य नीराजनं क्रियते । चन्द्रकान्तरत्नं तु चन्द्रकिरणस्पर्शेन स्रवति । तज्जलेनैव तद्रत्नं चन्द्राय अर्घ्यं ददाति, अर्थात् पूजाजलं सज्जीकुरुते । अञ्जलिपुटेन उद्धृतेन जलेन जनः समुद्रस्यैव तर्पणं करोति । तथैव हे देवि' त्वदीयाभिरेव वाग्भिः मया यदस्तूयत तत् सर्वं त्वदीयमेव । त्वया दत्तं तुभ्यमेव समर्पयामीत्याशयः ।

अत्र तु आचार्येषु कविना च विश्वाचार्येण श्रीशङ्करभगवत्पादेन इदम् निवेद्यते—ईश्वरार्पणपराणां कर्मणां विषये स्वाभिमानलवोऽपि मा भूत् । अस्मिन् जगति ममेति वक्तुं न किमप्यस्ति । जगदंबिकायां सर्वथा आत्मसमर्पणबुद्धिरेव श्रेयसे प्रेयसे च स्यादिति च ।

---

## कादम्बरी (शुकनासोपदेशः)

महाकविना बाणभट्टेन विरचितायाः कादम्बर्याः दिग्दर्शनार्थं अत्र शुकनासोपदेशस्यैकदेश उद्ध्रियते ।

प्रसङ्गः—चन्द्रापीडस्य युवराजाभिषेकः निर्वर्तिष्यमाण आस्ते । अभिषेकात् पूर्वमेव पक्वमतिः वृद्धसचिवः शुकनासः चन्द्रापीडमुपाजगाम । स वृद्धः तरुणाय चन्द्रापीडाय राज्यभरणार्थमत्यावश्यकान् उपदेशान् दिशति । तदनन्तरम् "युवावस्थायां वर्तमानं राजानं अहङ्कारकारिणी राज्यलक्ष्मीः दूषयति । तस्मात् तां प्रति भवता सावधानेन भवितव्यम्" इति कथयति ।

"तात! चन्द्रापीड! विदितवेदितव्यस्य अधीतसर्वशास्त्रस्य ते नाल्पमप्युपदेष्टव्यमस्ति । केवलं च निसर्गत एव अभानुभेद्यं अरत्नालोकच्छेद्यं अप्रदीपप्रभापनेयं अतिगहनं तमो यौवनप्रभवम् । गर्भेश्वरत्वं अभिनवयौवनत्वं अप्रतिमरूपत्वं अमानुषशक्तित्वं चेति महतीयं खल्वनर्थपरंपरा । सर्वाविनयानामेकैकमप्येषामायतनम्, किमुत समवायः । भवादृशा एव भवन्ति

भाजनानि उपदेशानाम् । अपगतमले हि मनसि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति सुखेन उपदेशगुणाः । अहंकार दाहज्वर मूर्च्छान्धकारिता विह्वला हि राजप्रकृतिः । अलीकाभिमानोन्मादकारीणि धनानि राज्य विष विकार तन्द्राप्रदा राजलक्ष्मीः । आलोकयतु तावत् कल्याणाभिनिवेशी लक्ष्मीमेव प्रथमम् । इयं हि सुभटखड्गमण्डलोत्पलवनविभ्रमभ्रमरी लक्ष्मीः क्षीरसागरात् पारिजातपल्लवेभ्यो रागम्, इन्दुशकलादेकांतवक्रताम्, उच्चैःश्रवसश्चञ्चलताम्, कालकूटात् मोहकशक्तिम्, मदिरायाः मदम् कौस्तुभमणेरतिनैष्ठुर्यम्, इत्येतानि सहवासपरिचयवशाद्विरहविनोदचिह्नानि गृहीत्वैवोद्गता । नह्येवंविधं अपरं अपरिचितमिह जगति किंचिदस्ति, यथेयं अनार्या । लब्धापि खलु सा दुःखेन परिपाल्यते । दृढगुणपाशसन्दाननिष्पन्दीकृतापि नश्यति । उद्दाम दर्प भट सहस्रोल्लासितासिपंजर विधृताप्यपक्रामति । मदजल दुर्दिनान्धकार गजघटित घनघटा परिपालितापि प्रपलायते । न परिचयं रक्षति । नाभिजनमीक्षते । न रूपमालोकयते । न कुलक्रममनुवर्तते । न शीलं पश्यति । न वैदग्ध्यं गणयति । न श्रुतमाकर्णयति । न धर्ममनुरुध्यते । न त्यागमाद्रियते । न विशेषज्ञतां विचारयति । नाचारं पालयति । न सत्यमवबुध्यते । न लक्षणं प्रमाणीकरोति । गन्धर्वनगरलेखेव पश्यत एव नश्यति । अद्यापि आरूढमन्दरपरिवर्तावर्तभ्रान्तिजनितसंस्कारेव परिभ्रमति । कमलिनीसंचरणव्यतिकरलग्ननलिननालकण्टकक्षतेव न किंचिदपि निर्भरमाबध्नाति पदम् । अतिप्रयत्नविधृतापि परमेश्वरगृहेषु विविधगन्धगजगण्डमधुपानमत्तेव परिस्खलति । पारुष्यमिवोपशिक्षितुमसिधारासु निवसति । विश्वरूपत्वमिव ग्रहीतुमाश्रिता नारायणमूर्तिम् । अप्रत्ययबहुला च दिवसान्तकमलमिव समुपचितमूलदण्डकोशमण्डलमपि मुंचति भूभुजम् । लतेव विटपानध्यारोहति । गङ्गेव वसुजनन्यपि तरङ्गबुद्बुदचंचला । दिवसकरगतिरिव प्रकटितविविधसंक्रान्तिः । पातालगुहेव तमोबहुला । हिडिम्बेव भीमसाहसहार्यहृदया । प्रावृडिवाचिरद्युतिकारिणी । दुष्टपिशाचीव दर्शितानेकपुरुषोच्छ्राया । स्वल्पसत्त्वमुन्मत्तीकरोति सरस्वतीपरिगृहीतमीर्ष्ययेव नालिङ्गति जनम् । गुणवन्तं अपवित्रमिव न स्पृशति । उदारसत्त्वं अमङ्गलमिव न बहुमन्यते । सुजनमनिमित्तमिव न पश्यति । अभिजातं अहिमिव लङ्घयति । शूरं कण्टकमिव परिहरति । मनस्विनं उन्मत्तमिवोपहसति । परस्परविरुद्धम् चेन्द्रजालमिव दर्शयन्ती प्रकटयति जगति निजचरितम् । तथाहि सततम् ऊष्माणमारोपयन्त्यपि जाड्यमुपजनयति । उन्नतिमादधाना अपि नीचस्वभावतामाविष्करोति । तोयराशिसम्भवापि तृष्णां संवर्द्धयति । ईश्वरतां दधानापि अशिवप्रकृतित्वमातनोति । बलोपचयमाहरन्त्यपि लघिमानमा-

पादयति। अमृतसरोवरापि कटुविपाका। विग्रहवत्यपि अप्रत्यक्षदर्शना। पुरुषोत्तमरतापि खलजनप्रिया।"

सरलार्थः (पंक्तयः 1—10 तात ! चन्द्रापीड......राजलक्ष्मीः)

त्वं सर्वमपि जानासि। तादृशस्य ते नकिञ्चिदप्युपदेष्टव्यमस्ति। यौवनजन्यं तमः सूर्यकिरणै रत्नप्रकाशैः दीपप्रभाभिरपि न खलु दूरीकर्तुम् शक्यम्। जनानां चत्वारोऽनर्थाः सन्ति। जन्मना प्रभुत्वं, नवयौवनं, असदृशसौन्दर्यम्, अतिमानुषशक्तिश्च। एतेष्वेकैकं एव सर्वासामापदां हेतुः। तर्हि समुदायस्य का कथा? उपदेशपात्राणि भवादृशा एव भवन्ति। शुद्धे मनस्येव हितोपदेशाः प्रतिफलन्ति। यथा निर्मले स्फटिके चन्द्रकिरणाः प्रविशन्ति। यथा दाहज्वरेण जना गतासंज्ञा भवन्ति तथैव अहंकारेण राजानः निर्विवेका जायन्ते।

(10—23 पंक्तयः अहंकार.......नश्यति)

धनं मिथ्याभिमानजनकं; राजलक्ष्मीः विषावेगमुत्पादयति च। शुभाभिलाषी भवान् इमां लक्ष्मीमेव पश्यतु। यथा भ्रमरी कमलवनेषु विहरति तथा इयं भटखड्गेषु विराजते। इयं सहवासपरिचयात् विरहदशायां विनोदार्थं मन्दारकिसलयादिभ्यः अनुरागादिकमादाय पयः पयोधेरुद्गता। अनार्येषु लक्ष्मीरिव अपरं किमपि परिचितं वस्तु नास्त्येव। तथाहि तस्या अधिगमो दुस्साधः; ततोऽपि रक्षणं दुष्करम्। गुणगणैर्बद्धापि पलायते। भटखड्गपंजरे बद्धापि निष्क्रामति। मत्तगजैः परिपालितापि गूढमपसरति। यद्यदावश्यकं तत्तत् सा न करोतीत्याशयस्य सोदाहरणं प्रपंचनमेव अनन्तरवाक्यैः क्रियते॥

(23—40 पंक्तयः अहंकार......नश्यति)

मन्दरपर्वतस्य भ्रमणसंस्कारात् लक्ष्मीरपि सदा भ्राम्यति। न स्थिरं तिष्ठति। पद्मसाहचर्यात् नालदण्डकण्टकैः विद्धमिव सा कुत्रापि न पदं न्यस्यति। राजभवनेषु गजमदजलपानेनेव मत्ता इतस्ततः परिक्रामति। क्रूरताभ्यसनायेव खड्गधारासु वसति। विश्वरूपदर्शनपरिचयार्थम् विष्णुमुपगता। इयम् कमलमिव समुचित मूल दण्ड कोशमण्डलम् राजानं परित्यजति। (मूल दण्ड कोशादयः कमलस्य राज्ञश्च सन्ति।) वसुजननी=वसूनां माता, सम्पदुत्पादयित्री च। अनिमित्तं=दुर्लक्षणं। अहिः=सर्पः। सद्गुणान् स परिहरति इत्याशयस्य विपुलनमेव परिशिष्टानि वाक्यानि।

(40—45 पंक्तयः । तथाहि...खलजनप्रिया)

परस्परविरुद्धमिन्द्रजालम् सा प्रकटयतीत्येतदुदाहरति। अत्र ऊष्मा इत्यस्य प्रतापः उष्णम् चार्थः । जाड्य =जडत्वम् शैत्यम् च। ईश्वरा अपि-अशिवप्रकृतयो भवन्ति (शिष्टम् स्पष्टम् ।)

[विदितं वेदितव्यं येन सः। अधीतानि सर्वाणि शास्त्राणि येन सः। न अल्पं अपि उपदेष्टव्यं अस्ति। केवलं च। निसर्गतः=स्वभावतः। भानुना न भेद्यम्। रत्नप्रभया अच्छेद्यं दीपप्रकाशेन दूरीकरणाय अशक्यं। महती इयं खलु। सर्वाविनायानां एकैकं अपि एषां आयतनम्। (एषां एकैकमपि इति योजनीयं) मणौ इव। गभस्तिः=किरणः। अहङ्कार-रूपस्य दाहज्वरस्य मूर्छया अन्धकारिता। मिथ्याभिमानेन उन्माद-कारीणि। राज्यविषविकारेण आलस्योत्पादिनी। सुभटानां खड्ग-मण्डलरूपेषु उत्पलवनेषु विभ्राम्यन्ती भ्रमरी। एकान्तवक्रता=सदा कुटिलता। विरहविनोदचिह्नानि (तत्तत्सहचरेभ्यः तत्तद्गुणानादाय)। न हि एवंविधं। यथा इयं अनार्या। दृढगुण पाश बान्धनैः चरितुं अशक्या अपि। अतिगर्विष्ठा भटसहस्र उल्लासित असिलता पंजर विधृता अपि अतिक्रामति। मदजल दुर्दिन अन्धकार गज घटित घन घटा परि-पालिता अपि। श्रुतं=विज्ञानं। अनुरुध्यते=अनुसरति। पश्यतः=पश्यन्तं अनादृत्य, पश्यति सति। आरूढ मन्दर परिवर्त आवर्त भ्रान्ति जनित संस्कारा इव। आवर्तः=भ्रमिः, *Whirl Pool.* कमलिनी संचरण व्यतिकर लग्न नलिन नाल कण्टक क्षत इव। विविधगन्ध गजगण्ड मधुपान मत्ता इव। पारुष्यं इव उपशिक्षितुं असिधाराम्। धारा=*Sharp edge.* लक्ष्मीः सायं कमलमिव राजानं मुंचति। दिवस करः=सूर्यः। परस्पर विरुद्धं च इन्द्रजालं इव। ऊष्माणं आरोपयन्ती अपि। आदधाना=जनयन्ती। बलोपचयं=बलाधिक्यं। आहरन्ती=जनयन्ती।]

---

॥ अभ्यासः ॥

I अतीते दिवसे अधीतम् शाकुन्तलम् (मूलमात्रम्) अनुवदत।

II सौन्दर्यलहर्याः भवतां हृद्यतमानि पञ्च पद्यानि उद्धृत्य अर्थम् लिखत।

III अधोदत्तानि समस्तपदानि विश्लेष्य लिखत। यथा—
सुभट-खड्ग-मण्डल-उत्पल-वन-विभ्रम-भ्रमरी।
1) मदजलदुर्दिनान्धकारगजघटितघनघटापरिपालिता।
2) आरूढमन्दरपरिवर्तावर्तभ्रान्तिजनितसंस्कारा।
3) अहङ्कारदाहज्वरमूर्च्छान्धकारिता।

**IV** इमां नरधातुक कथां अनुवदत ।

केरलेषु पाक्कनार इति कश्चित् चण्डाल आसीत् । ज्ञानी स दरिद्रोऽपि वित्तात् भीतः अवर्तत । स्वधर्ममाचरन् स एकाकी स्वकीये कुटीरे अवसत् । वंशैः पेटिकादिकं निर्माय यत् किञ्चिल्लभ्यते तेन स दिनान्यनयत् । सम्पत्तेरपि दारिद्र्यं स वरममन्यत । वित्तात् स बिभेति स्म ।

पाक्कनारस्य दीनदशां दृष्ट्वा भगवती लक्ष्मीः तस्मिन् दयामयी अजायत । सा यथाकथञ्चित् तं दारिद्र्यात् मोचयितुं निरणयत् । कदाचित् स वनान्तरे वंशकूटात् वंशं छिन्दन्नासीत् । तदा लक्ष्मीः तत्र नाणकानि रत्नानि चावाकिरत् । परितो विकीर्णानि तानि दृष्ट्वा पाक्कनारः भीतः दात्रं तत्रैव विसृज्य "नरधातुकः नरधातुकः" इत्युच्चैराक्रुश्य पलायितः । मध्येमार्गं द्वौ पथिकौ तमपश्यताम् । तौ पाक्कनारमपृच्छताम् ।

"हे सखे, क्व पलायसे? कुतः पलायसे? कथं भीतोऽसि?"

पाक्कनारः आक्रोशत् "अरे घातुकः! नरघातुकः! तस्मादतितरां भीतोस्मि ।"

"कुत्र नरघातुकः"? तावपृच्छताम्

"तत्र वर्तन्ते नाणकानि रत्नानि च । तान्येव नरघातुकाः । नान्यत् किमपि ।" पाक्कनारः अवदत् ।

"कुत्र सन्ति नाणकानि रत्नानि च ?।" तौ सोत्कण्ठमपृच्छताम ।

"तत्र वंशकूटं परितः ।" पाक्कनारो निरदिशत् ।

निर्देशमनुसृत्य तौ वंशकूटं गतौ । पाक्कनारस्तु किञ्चिदपसृत्य तत्रैवातिष्ठत् । द्वावपि तौ तत्र वंशकूटे रत्नानि नाणकानि च विकीर्णान्यपश्यताम् । द्रुतमेव तौ उत्तरीयं विस्तीर्य तानि सर्वाण्यपि भाण्डीचक्रतुः । पाक्कनारेण विसृष्टं दात्रमपि तावगृह्णाताम् । हस्ते दात्रं गृहीत्वा अग्रे एकः तथा पश्चात् शिरसि वित्तभाण्ड विन्यस्यान्य इति क्रमेण तौ ततः प्रतिन्यवर्तेताम् ।

अग्रे गच्छन् दात्रपाणिरेवमचिन्तयत् । "अहमग्रे गच्छामि । यदि पश्चात् वित्तभाण्डं वहन् मम सखा मां वञ्चयित्वा अन्येन केनापि पथा धावेत् तर्हि मम सर्वंपि विनष्टं स्यात् । अहं तस्य पश्चादेव सञ्चरामि ।" इति निश्चित्य स पश्चाद् गन्तुमारभत । क्रमेण तस्य मनसि अन्या काचन चिन्ता उदियाय ।

"इदं वनान्तरं तु निर्मक्षिकम् । मम हस्ते दात्रमस्ति । यदीमं मे सखायं अनेन दात्रेण कथावशेषं करिष्ये तर्हि एतत् सर्वमपि मदायत्तं भविष्यति ।"

एवं विचिन्त्य स दात्रेण अग्रे गच्छतः सुहृदः कण्ठं चिच्छेद ।

(वंशकूटः= Bamdoo-bush. पेटिका= Basket. दात्रं =cutting knife. घातुकः= Killer परितः =around. उत्तरीयम्= shawl निर्मक्षिकं =lonely.)

# एकोनचत्वारिंशो दिवसः

आधुनिककाव्यभाषापरिचयः

॥ शकुन्तला ॥

[पुनस्समागमानन्तरं शकुन्तला कस्यांचन रात्रौ राजसौधे हंसतूल-धवले मृदुले पल्यङ्के भर्त्रा दुष्यन्तेन सह निद्राणा वर्तते। निद्रामन्तरा स्वप्ने किमपि दृष्ट्वेव झटिति सा प्रबुद्धा भवति। भर्ता तदानीमपि निद्राण एव तस्याः पार्श्वे शेते। एकान्तेऽस्मिन् सा चिरवियुक्तं कण्वाश्रमं सङ्कल्पमात्रेण प्रविशति।]

शेते निशीथे सविधेऽवदाते पतिः स सम्राट् कमनीयतल्पे।
द्रागेकपत्नी वसुधासपत्नी शकुन्तलाऽबुध्यत भग्ननिद्रा॥ 1

आत्मानपासीनमविन्दतासौ साध्वी तदाभ्रङ्कषसौधगर्भे।
यदा सनीरा यमुनासमीराः संवाहयामासुरमी तदङ्गम्॥ 2

स्वप्ने चिरं विस्मृतिसिन्धुमग्नो दृष्टः स रम्याश्रमभूमिभागः।
प्रियंवदा सा प्रियमालपन्ती तथाऽनसूयाप्यनसूयशीला॥ 3

कण्वः कृपापूर्णपरार्थवृत्तिः सदाऽनुगृह्णन् सचराचरां गाम्।
वैखानसैराकलितोपकण्ठः तपस्स्वकुण्ठःप्रणयी पिता च॥ 4

चिरं निदध्यौ गलदश्रुबिन्दुप्रवाहबन्दीकृतलोचना सा।
अस्तम्भतान्तःकुहरे गलस्य सगद्गदं निश्वसितं च तस्याः॥ 5

ददर्श खे सा चरतोऽभ्रखण्डान् गवाक्षतश्चन्द्रिकया विलिप्ते।
चित्तेऽपि तस्याः परिवृद्धधाराः चेरुर्विचाराश्च बहुप्रकाराः॥ 6

'अपि स्वधाम्ना कुशली पिता मे वैखानसाश्चाधिगतात्मविद्याः।
निरासतो मे परिदीर्णचित्ता कथां गता कां बत गौतमी स्यात्॥ 7

श्रोष्यामि किंस्वित् पुनरप्यमूनि हृद्यानि चोद्यत्किलिकिंचितानि।
अधस्तलं मे मनसः स्पृशन्ति प्रियंवदायाः प्रियभाषितानि॥ 8

कस्याग्रहस्तं कृतिनः समर्थं न्यपीडयत्सा रसिका सखी मे!।
अभीष्टभर्तुः पदसेवया स्यात् तथाऽनसूया चरिताखिलार्था!॥ 9

'इमे अपि द्वे तनये प्रदेये' मृषा न तत्स्याद्वचनं पितुर्मे।
सख्यौ परं मे भरतोपमैस्ते द्रक्ष्यामि भूयोऽपि सुतैः सनाथे?॥ 10

अरालसीमानि विसृत्वराणि मरालजालैरविनाकृतानि ।
विलोकयिष्ये पुनरप्यमूनि किं मालिनीधूसरसैकतानि? ।। 11

उत्कन्धरः सर्वजनप्रियो मे पत्या सदृक्षः सहकारवृक्षः ।
युक्तो वनज्योत्स्निकया तरुण्या विलासशीलः फलितः किमु स्यात्? ।। 12

दीर्घैरपांगैर्विनिवृत्ति काले विलोकितं यन्मृगशावकेन ।
लीढं यदङ्गं, द्वयमेतदद्याप्याभाति मे मुद्रितमन्तरंगे ।। 13

बाष्पं प्रसूनैः परमुत्सृजन्त्यः प्रवालयन्त्यो लतिकाः प्रवालान् ।
न्यवारयन्मां गमनात् तदद्याप्याभाति मे चित्रितमन्तरंगे ।। 14

अन्तर्दधानां वनराजिमध्ये पश्यन् सखीभ्यां सह मां सबाष्पम् ।
संस्तम्भिताङ्गः स पिताऽधुनापि तिष्ठत्यहो मे पुरतस्तथाक्ष्णोः ।। 15

कदा नु कान्ते कलकाननान्ते भूयोऽप्यनाडम्बरवेषभूषा ।
घटाम्बुधारापरिसेचनाद्यैः सोल्लासमुल्लासयितास्मि सर्वान् ।। 16

अदूषयन्मां नृपतेः समक्षं किंचित् सतीं शाङ्र्गरव त्वमेताम् ।
विधिर्विगर्ह्यो न तु सर्वथा त्वं त्वं द्रष्टुकामास्मि तव स्वसा त्वाम् ।। 17

परिष्वजस्व प्रियतात पुत्रीमागःसहस्रं सदयं क्षमस्व ।
हविःसुगन्धीनि तवाङ्गकानि पुनः पुनर्मां मलिनां पुनन्तु ।। 18

प्रियंवदे देह्यवलम्बनं मे विचारधारा च्छतायै ।
तथानसूये परिरक्ष मां त्वं नियंत्रितोल्लासविलाससौख्याम् ।। 19

सगद्गदः सोच्छ्वसितः स कण्ठो बभंज मौनं प्रसृतं समन्तात् ।
महीपतिः 'किन्विदमि'त्यकस्मादबुध्यतोद्भ्रान्तविसारिताक्षः ।। 20

"क्षमस्व कम्राङ्गि ममापराधान् यैर्दूयसेऽद्यापि कृतैर्मया प्राक् ।
स्वतस्तमोन्धा विबुधैः प्रदत्तां सुधां सुरामाकलयन्ति मूढाः ।।" 21

इति वदति नरेन्द्रे नाशकत्सुन्दरी सा
विशदयितुमनल्पारूढमन्तर्विकारम् ।
नयनसलिलधाराक्लिन्नगण्डस्थली सा
कमितुरुरसि ताम्यद्यातनाऽमूद्विलीना ।। 22

पद्यम्1—भर्ता दुष्यन्तः अन्तिके निद्राणः शेते। शकुन्तला स्वप्ने ऽबुध्यत। शी+ते=शेते, शयानो वर्तते। सविधे=समीपे। अवदाते= विशुद्धे। द्राक्=शीघ्रं। एकपत्नी=एकभर्तृका। प. 2) आत्मानं= स्वं। अविन्दत=अजानात्। अभ्रङ्कष=आकाशचुम्बिन्। गर्भे=अन्तः। संवाहयामासुः=स्निग्धं पस्पृशुः (shampooed)। समीरः=पवनः प. 3) तस्याः मनसि आश्रमपरिसरः प्रियंवदा च प्रतिभातः स्म। सिन्धुः=समुद्रः। प. 4) कण्वोऽपि सङ्कल्पे आविर्भवति स्म। गाम्= भूमिम्। वैखानसैः=मुनिकुमारैः। उपकण्ठः=परिसरः। आकलित= आवृत। अकुण्ठः=सफलः। पिता च 'दृष्टः' इति पूर्वपद्येनान्वयः। प. 5) सा बाष्पं व्यसृजत् निशश्वास च। निदध्यौ=अध्यायत्। बन्दीकृत= निरुद्धः। अस्तंभत=स्तब्धमभूत्। प. 6) सा गवाक्षद्वारा (window) नभसि चरतो मेघशकलान् ददर्श। तस्याः चित्तेऽपि चिन्ताशकलाः संचेरुः। प. 7) पशुः मुनिकुमाराणां गोतमश्च का कथा स्यात्? स्वधाम्ना= स्वतेजसा। अधिगत=प्राप्त निरासतः=त्यागात्। दीर्ण=दलित प. 8) सा प्रियंवदां स्मरति। किंस्वित्=किम्? उद्यत=निर्गच्छत्। किलिकिंचितं=विविधविकारसंमिश्रो भावः। प. 9) ते मम सख्यौ भर्तृमत्यौ स्याताम् इति सा उद्भावयति। कृती=भाग्यवान् 10) सा पितुर्वचनं स्मरति। सख्यावपि अहमिव पुत्रवत्यौ स्यातां इति च सा संभावयति। मृषा=वृथा। सनाथे=सहिते। प 11) सा मालिनीनदी तटं स्मरति। अराल=वक्र, कुटिल। विसृत्वर=व्याप्ता। मरालजालः= हंससमूहः। अविनाकृत=सहित। धूसर=धवल। प. 21) सहकारो वनज्योत्स्ना च स्मृतिं प्रविशतः। उत्कन्धरः=उन्नतकण्ठः (शीर्षः)। सदृक्षः= सदृशः। प. 13) पुत्रनिर्विशेषः स मृगशिशुश्च तस्य स्मृतिपथमायाति। मृग- शावकस्य करुणविलोकनं अंगलेहनं च मनसि मुद्रितमिव वर्तते। लिह्+त= लीढ (licking) द्वयं एतद् अद्य अपि आभाति। प. 15) आश्रमात् प्रेषणसमये तस्याः तिरोधानपर्यन्तं कण्वो वीक्षमाणोऽवर्तत। सोऽयं तस्याः पुरतः तथैव तिष्ठतीव। अन्तर्दधानां तिरोभवन्तीं। अक्ष्णोः=नेत्रयोः प. 16) सा आश्रमे जलसेचनादिपरिचरणं कर्तुम् अधुनाप्यभिलषति। प. 17) दुष्यन्तसमक्षं स्वं दूषितवन्तमपि शाङ्गरवं सा दिदृक्षति। विगर्ह्यः =निन्द्यः॥

प: 18) तस्याः ईदृशी सङ्कल्पमयी चिन्ता क्रमशः तथ्यमयीव परिणता। सा आश्रमे वर्तते, कण्वः स्वसमक्षं तिष्ठति इति तस्याः प्रतिभाति स्म च। सा समक्षं स्थितमिव तातमभिसंवीक्ष्य वदति। परिष्वजस्व =आलिङ्गनं कुरु। आगस् =अपराधः। पुनन्तु =शुद्धीकुर्वन्तु। प. 19) पुरतः प्रत्यक्षमिव दृश्यमानां प्रियंवदां अनसूयां च वदति। देहि =यच्छ। उल्लासविलास सौख्यं राजधान्यां यस्याः नियन्त्रितं, तादृशीं मां। प. 20) प्रथमं स्वप्नः ततः सङ्कल्पः ततः अबोध प्रलपनं तदनन्तरम् क्रन्दनं अयमत्र क्रमः। सा सगद्गदं क्रन्दति। तदा पार्श्वे शयानो दुष्यन्तः प्रबुध्य किमिदमिति पृच्छति। अकस्मात् द्रुतम्। प. 21) पूर्वं स्वकृतं परित्यागं स्मृत्वा सेयं अधुनापि रोदितीति अन्यथासंभाव्य राजा तां क्षमामर्थयते। दूयसे =सन्तपसि। तमोन्धाः = तमसा अन्धाः। सुरा =मद्यं। आकलयन्ति =गणयन्ति। प. 22) शकुन्तला तदा न किमपि वक्तुमशकत्। सा स्वकमितुर्वक्षसि लग्ना अशेत।

---

॥ उपनिषद्भाषापरिचयः ॥

कठोपनिषद्

अद्य उपनिषदां एकदेशज्ञानार्थं अथवा दिग्दर्शनार्थं कठोपनिषदमवतारयामः। उप+नि+सद् इति अस्य पदस्य विभक्ता अंशाः। उपनिषीदति' उपगमयति, जिज्ञासून् परमात्मनः समीपं गमयति इति उपनिषद् शब्दस्यार्थः। सूक्ष्मदृक् कर्मकृत् इत्यादि शब्दवत् अयं क्विबन्तः शब्दः। उपनिषदां पठनेन जिज्ञासव आस्तिकाः ब्रह्मसामीप्यं प्राप्नुवन्तीत्यर्थः ॥

उपनिषदः परश्शताः विद्यन्ते। किन्तु ताः सर्वा अपि न तुल्यमूल्यवन्तः सन्ति। काश्चन निर्वैचित्र्या अरोचका गतानुगतिकत्वात् विरसाश्च। उपनिषच्छाखासु प्रकृष्टेयं कठोपनिषद् यतोऽस्यां कथारूपेण आत्मविद्या प्रतिपादितास्ति। आत्मतत्त्वज्ञानमेव सर्वास्वप्युपनिषत्सु दृश्यते। इयं विचारधारा वेदकालादारभ्याभिवृद्धिं प्राप्ता लक्ष्यते। वेदेष्वितस्ततः विकीर्णतया दृश्यमान आत्मविद्याविचारः उपनिषत्सु पल्लवितः कुसुमितः फलितश्च समालोक्यते। अस्याः कठोपनिषदः कथासारोऽत्र प्रदर्श्यते ॥

वाजश्रवसो नाम कश्चिद् ब्राह्मणः सर्वस्वदक्षिणं नाम यज्ञमारभत, न खलु स मोक्षकामः, किन्तु कीर्तिकाम आसीत्। परप्रशंसामात्राभिलाषी स जीर्णा आसन्नमरणाश्च धेनूः ब्राह्मणेभ्यो दातुं ऐच्छत्। तस्यासीत् कश्चन पुत्रो नचिकेता नाम। यथाश्रुत यथादृष्टं विश्वसन् स शुद्धाशयः पितरमुपागम्य पप्रच्छ, "तात, त्वं मां कस्मै यच्छसि" इति। तस्य निष्कलंकस्य कुमारस्यैवंविधो विचार आसीत् ',पिता यागे सर्वस्वं यच्छति। सर्वस्वदक्षिणस्य यज्ञस्यायमेव स्वभावः खलु। एवं चेत् पुत्रोपि पितुः सर्वस्वे अन्तर्भवति। तस्माद् अहमपि कस्मैचिद् दातव्य एव'' । एवं विचिन्त्यैव स ऋजुमतिः पितरं पृष्टवान् "तात मां कस्मै दास्यसि" इति वक्रबुद्धिः अशुद्धान्तरंगः पिता, पुत्रः स्वमपहसतीत्याशशंके। नचिकेताः प्रथमं पप्रच्छ। पिता मौनमालम्बे। पुनरपि पप्रच्छ। पिता तथैवातिष्ठत्। पुत्रः पुनरपि अपृच्छत्। प्रश्नस्य पुनरावर्तनेन पिता कुपितो भूत्वा पुत्रमवदत्। "त्वामहम् यमाय यच्छामि।" इति

क्षुद्धो नचिकेतास्तूष्णीं ऽभवत्। स पितुर्वचनमनुसृत्य यमपुरं प्राप। तस्मिन् अवसरे यमस्तत्र नासीत्। नचिकेता यमस्यागमनं प्रतीक्षमाणः तिस्रो रात्रीः तत्रैव भक्ष्यपेयरहितः उवास। यदा यमः प्रत्यवर्तत तदा स्वगृहे कंचन ब्राह्मणकुमारं अनशनव्रतं स्थितं ददर्श। धर्मराजो यमः अपराधबोधेन तस्मै त्रीन् वरान् दातुमुद्युक्तोऽभवत्। कुमारस्तु यमस्यौदार्यं स्वीचक्रे। स प्रथमेन वरेण इहलोकसौभाग्यदायकं पितृप्रसादं, द्वितीयेन परलोकसौभाग्यदायकं अग्निं च अभ्यर्थितवान्। अथान्ते तृतीयेन वरेण स अध्यात्मविद्यामर्थयामास। सोऽयमध्यात्मविद्योपदेश एवास्मिन् मुख्यतमो भागः। वस्तुतस्तु सविशेषरूपेण अथवा आकर्षकतया अध्यात्म विद्याविशदीकरणार्थमिदं कथारंभनं महर्षिणा कृतमिति मन्ये।

उपनिषदियमध्यायद्वयेन द्विधा विभक्तास्ति। एकैकोऽप्यध्यायः पुनरपि वल्लीभिर्विभक्तो दृश्यते। तत्र प्रथमाध्यायात् प्रथमवल्लीतः कानिचन् पद्यानि अत्र दिग्दर्शनार्थम् उद्ध्रियन्ते।

अथ उपनिषत्सूक्तमारभते।

1) उशन् ह वे वाजश्रवसः सर्ववेदसम् ददौ।
तस्य ह नचिकेता नाम पुत्र आस।

उशन्= कामयमानः, इच्छन्। वाजश्रवसः =कश्चिद् ब्राह्मणः । सर्व-वेदसं= सर्वस्वं । आस =आसीत् । ह, वै इत्येतौ वृत्तार्थस्मरणार्थकौ अथवा प्रसिध्यर्थकौ निपातौ ।

सारः—स्वर्गं कामयमानः वाजश्रवसो नाम कश्चित् ब्राह्मणः स्वं सर्व-मपि सम्पत्संभारं दातुं निरणयत् । तस्य नचिकेताः नाम कश्चित् पुत्र आसीत् ।

2) तं ह कुमारं सन्तं दक्षिणासु नीयमानासु ।
श्रद्धाऽऽविवेश; सोऽमन्यत ॥

श्रद्धा =आस्तिक्यबुद्धिः अस्ति इति विश्वास एव आस्तिक्यबुद्धिः; (*optimism*). नास्ति इति विश्वासस्तु नास्तिक्यबुद्धिः । (*pessimism*)

अन्वयः— दक्षिणासु नीयमानासु तं कुमारं सन्तं श्रद्धा आ विवेश । सः अमन्यत ।

सर्वस्वदानरूपे यज्ञे प्रवर्तमाने सति बहवो ब्राह्मणाः समागताः । वाजश्रवसस्तु तेभ्यः सर्वेभ्योऽपि दक्षिणां यच्छति स्म । पुरातने काले आधुनिकपणादीनां सम्पदां स्थाने गावः उपायुज्यन्त । एवं वाजश्रवसस्यापि सम्पद् गोरूपा एवासीत् । ता गाव एव तेन दीयमाना दक्षिणा आसन् । किन्तु ताः गावः प्रसूतिकालमतिक्रान्ता निरुपयोगा आसन । तस्य तु दाता इति प्रसिद्धिरेवावश्यकी खलु । ततः देयवस्तुनो विषये तस्य गणना नासीत् । पितुः इदमाचरितमनुचितमिति चिन्ता नचिकेतसो हृदयमाविवेश । स चिन्ताकुलः अभवत् । यथा—

3) पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः ।
अनन्दा नाम ते लोकाः तान् स गच्छति ता ददत् ।

पीतोदकाः= पूर्वं कुत्रचिदपि काले उदकं पीतवत्यः । अधुना तु उदकपानाय शक्तिरपि तासु नावशिष्यते इत्याशयः । जग्ध= भक्षित । जग्धतृणाः =पूर्वं क्वचिदपि काले तृणं भक्षितवत्यः । अधुना तु तृणं चरितुं शक्तिरपि नास्तीति पूर्ववदाशयः । दुग्धदोहाः । दोहाः =क्षीरम्; पूर्वं क्वचिदपि काले तासां दोहनं कृतं । निरिन्द्रयाः =प्रजननशक्तिशून्याः; अनन्दाः = आनन्दरहिताः । ददत् =यच्छन् ।

अन्वयः—पीतोदका जग्धतृणाः दुग्धदोहाः निरिन्द्रियाः ता गावः यः ददत् सः तान् लोकान् गच्छति ये अनन्दाः नाम लोकाः ।

सारः—या नाम गावः पूर्वम् जलं पीतवत्यः अधुना न पिबन्ति, या नाम पूर्वम् तृणं खादितवत्यः, अधुना तु न खादन्ति, याश्च पूर्वम् दोहनक्षमा अभवन् अधुना तु क्षीरशून्या वर्तन्ते; तथैव याः पूर्वम् प्रसूतवत्यः अधुना प्रजननशक्ति-शून्याः सन्ति, तादृशीः गाः यः यच्छति स आनन्दशून्यं लोकं प्राप्स्यति । पिता तु तादृशीः गा यच्छति । एवंच तेन नरकमेव गन्तव्यं स्यात्; तत् पुत्रेण नियतमेव निवारणीयम् इति मत्वा स पितुरन्तिकं गत्वा वदति ।

4) स होवाच पितरं तत कस्मै मां दास्यसीति ।
द्वितीयं तृतीयं तं होवाच मृत्यवे त्वा ददामीति ॥

ह+उवाच मृत्युः =यमः, तत =तात ।त्वा =त्वाम् ।

अन्वयः—हे तात मां कस्मै दास्यसि इति स पितरं उवाच ह । स तं द्वितीयं तृतीयं उवाच ह । त्वा मृत्यवे अहं ददामि इति (पिता तमवदत्) ।

कुमारः पितरं पप्रच्छ । हे पितः, त्वं सवस्वं दातुं निश्चितवान् खलु । पुत्रः अहमपि तव सर्वस्वमेव । एवं च अहमपि दातव्य एव । त्वं मां कस्मै दित्ससि? वाजश्रवसः मौनमभजत । कुमारः द्वितीयमपृच्छत् । स्वकीय-मन्तर्गतं जानन् पुत्रः स्वम् परिहसतीति मिथ्याबोधात् स पिता पुनरपि सेर्ष्यम् मौनमावालंबत । पुत्रः तृतीयं च अपृच्छत् । तदा पिता क्रोधमसहमानः पुत्रमवदत् "अहम् त्वां यमाय ददामि" इति ।

शुद्धात्मा नचिकेताः 'किमर्थम् मह्यं पिता अकुप्य' दिति विचिन्त्य खेदम-सहमानः परिदेवयांचकार अथवा रुरोद ।

5) बहूनामेमि प्रथमो बहूनामेमि मध्यमः ।
किंस्विद् यमस्य कर्तव्यं यन्मयाद्य करिष्यति ॥

एमि =गच्छामि । कर्तव्यं =प्रयोजनं । स्वित् =वा, आहोस्वित्, अथवा । किं स्वित् =किंवा ।

अन्वयः—बहूनां प्रथमः एमि। बहूनां मध्यमः एमि। यमस्य किञ्चित् कर्तव्यमस्ति? मया यद् अद्य करिष्यति?

अहं बहूनां शिष्याणां अनुसरणशिक्षणादिषु शिष्यवृत्तिषु प्रथमः अस्मि। अथवा बहूनां शिष्याणां मध्यमो वा अस्मि। न कदापि अधमत्वे प्राप्तवानस्मि। पुनः कथं पिता मां मृत्यवे दत्तवान्? अथच मयि दत्ते सति किं नाम मया यमस्य प्रयोजनं स्यात्। मया किं नाम करणीयम्?

यमस्य मया किमपि प्रयोजनं न स्यादेव। तथापि मम पितुः वाक् पालयितव्या इति चिन्ता पुनरप्यनुवर्तते।

6) अनुपश्य यथा पूर्वे प्रतिपश्य तथा परे।
सस्यमिव मर्त्यः पच्यते सस्यमिवाजायते पुनः॥

अनुपश्य, प्रतिपश्य=आलोचय। पूर्वे=पुरातनाः जनाः। अपरे अधुनातना जनाः। पच्यते=जीर्णः भवति।

अन्वयः—यथा पूर्वे(आसन्) (तान्) अनुपश्य। तथा (यथा) अपरे (आसन् तान्) प्रतिपश्य। मर्त्यः सस्यं इव पच्यते सस्यं इव पुनः सः जायते।

नचिकेताः पितरमभिसंबोध्य कथयति। यथा पूर्तस्मिन् काले जना अवर्तन्त तेषां वृत्तमाचरितं च सम्यग् विचारय। न तैः मृषा कृतं। पितृवाचस्तु तैः पालिताश्च। अपरान् आधुनिकान् जनानपि पश्य। तैरपि न खलु मृषा क्रियते। किमनेन मृषाकरणेन सिध्यते। मृषाकुर्वाणः सत्यम् पालयन् वा नरः न कदापि चिरंजीवी भविष्यति। सत्यं पालयन् अपालयन् वा सर्वोऽपि जनः सस्यमिव जायते, वर्धते, म्रियते च। पुनः मृषा (असत्यं) करणेन को नाम लाभः? अतः सर्वथैव "मृत्यवे त्वा ददामी"ति वाक् मृषा न भवेत्। एवं च पितरं सत्यसङ्कल्पं चिकीर्षामि इति उवाच।

वाजश्रवसः तं यमगृहं प्रेषयामास। यदा स तत्रागच्छत् तदा धर्मदेवः तत्र नासीत्। कार्यान्तरार्थम् अन्यत्र कुत्रापि गत आसीत्। तिस्रः रात्रीः स उपवसन् स्वस्वामिनम् प्रतीक्षमाणः तत्र अतिष्ठत्। दिनत्रयादनन्तरं यमः समागतः। यदा स गोपुरद्वारं प्रविष्टः तदा अमात्याः तमुपगम्य ससंभ्रमं ऊचुः।

7) वैश्वानरः प्रविशति अतिथिर्ब्राह्मणो गृहम् ।
तस्यैतां शान्ति कुर्वन्ति हर वैवस्वतोदकम् ॥

वैश्वानरः =अग्निः । हर =आनय । वैवस्वत =हे यम । उदकं =जलम् ।

अन्वयः—यः वैश्वानरः ब्राह्मणः (सन्) गृहं प्रविशति तस्य एतां शान्ति कुर्वन्ति । वैवस्वत उदकं हर ।

यमस्य अमात्या आगतं यममुद्बोधयन्ति । कस्यचित् गृहिणः गृहे अग्निसदृशो ब्राह्मणः प्रविशति चेत् तस्य दाहकत्वशक्ति क्षपयितुमिव आतिथेया अर्घ्यादिभिः तं पूजयन्ति । अतः हे वैवस्वत त्वं द्रुतमेव पाद्य-मादाय तं पूजयित्वा प्रीणय ।

यदि नैवं क्रियते, तर्हि सर्वनाशः स्यादिति कथ्यते ।

8) आशाप्रतीक्षे संगतं सूनृतां च इष्टापूर्ते पुत्रपशूंश्च सर्वान् ।
एतद् वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन् वसति ब्राह्मणो गृहे ॥

आशा =अनिश्चितार्थप्रार्थना । प्रतीक्षा =निश्चितार्थप्रतिपालनम् । संगतं = सज्जनसंसर्गजातं फलं । सूनृता =सत्या वाक् । इष्टापूर्तं =इष्टं यागजं पुण्यं । पूर्तम् =आरामनिर्माणकूपखननादिजं पुण्यम् । वृङ्क्ते =विनाशयति । अल्प-मेधसः= अल्पबुद्धेः । अनश्नन्= आहाररहितः ।

अन्वयः—यस्य गृहे ब्राह्मणः अनश्नन् वसति (तस्य) अल्पमेधसः पुरुषस्य आशाप्रतीक्षे सङ्गतम् सूनृतां इष्टपूर्ते पुत्रपशून् च सर्वान् एतत् वृङ्क्ते ।

यस्य अल्पप्रज्ञस्य पुरुषस्य गृहे कश्चिद् ब्राह्मणः उपवसन् वसति तस्य आशा न फलिष्यति । प्रतीक्षा न फलिष्यति । सज्जनसंसर्गजं सत्यभाषणजं आरामनिर्माणकूपखननादिजन्यं पुण्यं च यावद् नश्यति । सर्वे पुत्राः पशवश्च नङ्क्ष्यन्ति । तेन सर्वथा अतिथिः पूजनीय एव ।

अमात्यानां वाचम् निशम्य यमधर्मराजः आत्मानम् कृतापराधम् विज्ञाय नचिकेतसमागम्य तं प्रसादयितुं त्रीन् वरान् प्रतिजज्ञे ।

9) तिस्रो रात्रीर्यदवात्सीर्गृहे मे अनश्नन् ब्रह्मन् अतिथिर्नमस्यः ।
नमस्तेऽस्तु ब्रह्मन् स्वस्ति मेऽस्तु तस्मात् प्रति त्रीन् वरान् वृणीष्व ॥

रात्रीः, यद् अवात्सीः =अवसः। अनश्नन् =अशनं न कुर्वन्। नमस्यः = प्रणामार्हः। वृणीष्व =प्रार्थयस्व

हे ब्रह्मन्, त्वं अतिथिः सन् अनश्नन् मे गृहे तिस्रो रात्रीः यद् अवात्सीः तद् त्वं नमस्यः असि। ते नमः अस्तु। हे ब्रह्मन्, मे स्वस्ति अस्तु। तस्मात् प्रति त्रीन् वरान् वृणीष्व।

हे ब्राह्मणकुमार, त्वं अतिथिः भूत्वा मम गृहे निराहारः सन् तिस्रः रात्रीः अवसः। ततः त्वं मया नमस्कार्यः। तेन ते नमः अस्तु। मे भद्रं च भूयात्। तथापि अपराधबोधो मां बाधते। तत्परिहारार्थम् अहं तुभ्यम् त्रीन् वरान् दातुमिच्छामि। प्रार्थयस्व।

तत् श्रुत्वा नचिकेता ब्रूते।

10) शान्तसंकल्पः सुमना यथा स्यात् वीतमन्युर्गौतमो माभि मृत्यो।
त्वत्प्रसृष्टं माभिवदेत् प्रतीत एतत् त्रयाणां प्रथमं वरं वृणे॥

शान्तसंकल्पः =प्रशान्तचिन्तः। सुमनाः =प्रसन्नमनाः। वीतमन्युः = विगतरोषः। गौतमः =वाजश्रवसः। मा+अभि। त्वत्प्रसृष्टं =त्वया विसृष्टं। अभिवदेत् =अनुगृह्णीयात्। प्रतीतः =प्रत्यभिज्ञातः। वृणे = अभ्यर्थये। मा =माम्।

अन्वयः—हे मृत्यो, गौतमः मा अभि शान्तसंकल्पः सुमनाः वीतमन्युः च यथा स्यात्, त्वत्प्रसृष्टं मा प्रतीतः अभिवदेत्, एतत् त्रयाणां प्रथमं वरं अहं वृणे।

हे धर्मराज, त्वं मह्यं वरं दित्ससि तर्हि अयमेव आदिमो वरः मया प्रार्थ्यते। तथाहि—यथाहं गृहात् यमपुरं प्रस्थितः ततः प्रभृति मम पिता मां प्रति चिन्ताकुलः स्यात्। तस्य तादृशी चिन्ताकुलता प्रशान्ता भवेत्। तथा, यदाहं गृहं निवर्तिष्ये तदा तस्य मनः प्रसन्नम् च भवेत्; तस्य मां प्रति यः क्रोधोऽस्ति स मद्दर्शने दूरीभवेत्। त्वया विसृष्टं मां स प्रत्यभिजानीयात् अनुगृह्णीयाच्च। अयम् वरः त्वया प्रथमतो मे प्रदातव्यः।

## ॥ अभ्यासः ॥

I 'शकुन्तला'याः भवतां हृद्यतमानां षण्णां पद्यानां सारं लिखत।

II अद्य पठितानां उपनिषत्सूक्तानां सारं लिखत ।

III कठोपनिषदः अवतरणकथां अनुवदत ।

IV अधोलिखितस्य पद्यस्य अन्वयं लिखत—

संचारिणी दीपशिखेव रात्रौ
यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे
विवर्णभावं स स भूमिपालः ॥

व्यतीयाय =अतिचक्राम, अपासरत् । अट्टः =सौधं । प्रपेदे =प्राप ।

[ रघुवंशे इन्दुमतीस्वयंवरावसरः । विवाहवेदिकायाः पुरतः पंक्ति विधाय तस्याः भर्तृपदमभिलषन्तो राजानः मणिमंचेषु उपविशन्तो विराजन्ते । सख्या सह इन्दुमती वरणमालां करे धृत्वा एकैकान् नृपान् अभिगच्छति । सखी राज्ञां परिचयं ददाति । इन्दुमती वैमनस्यात् तं नृपं त्यक्त्वा अन्यमभिगच्छति । तदा प्रथमस्य नृपस्य मुखं विवर्णं भवति । द्वितीयस्य तु प्रकाशमानं च भवति । यदा तं त्यक्त्वा अन्यं गच्छति तदा तस्य मुखं विवर्णीभवति अन्यस्य तु उज्ज्वलं च भवति । एतादृशं इन्दुमत्याः सभामध्ये कृतं संचारं कविरेवमुत्प्रेक्षते । अन्धकारावृते राजमार्गे काचिद् दीपशिखा स्वयं संचरतीति भावयामः । संचरणसमये अन्तिकस्थं सौधम् प्रकाशते । यदा सा दीपशिखा अग्रे अग्रे अपसरति तदा तदा प्रथमम् सौधम् निष्प्रभं भवति अग्रे स्थितं सप्रभं च भवति । एवमासीत् इन्दुमत्याः प्रयाणम् । एतेनैव श्लोकेन कालिदासस्य दीपशिखाकालिदास इति प्रशंसा च लब्धा ।]

V अधोक्तानां सुभाषितानां अर्थम् लिखत ।

यस्मिन् देशे न सम्मानो, न प्रीतिः, न च बान्धवाः ।
न च विद्यागमः, कश्चित् न तत्र दिवसं वसेत् ॥ १ ॥

उदारस्य तृणं वित्तं, शूरस्य मरणं तृणम् ।
विरक्तस्य तृणं भार्या, निःस्पृहस्य तृणं जगत् ॥ २ ॥

शैले शैले न माणिक्यं, मौक्तिकं न गजे गजे ।
साधवो न हि सर्वत्र, चन्दनं न वने वने ॥ ३ ॥

प्रदोषे दीपकश्चन्द्रः प्रभाते दीपको रविः ।
त्रैलोक्ये दीपको धर्मः सुपुत्रः कुलदीपकः ॥ ४ ॥

ते वन्द्याः, ते महात्मानस्तेषां लोके स्थिरं यशः ।
यैर्निबद्धानि काव्यानि ये वा काव्येषु कीर्तिताः ॥ ५ ॥

मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् ।
मनस्यन्यत् वचस्यन्यत् कर्मण्यन्यद्दुरात्मनाम् ॥ ६ ॥

गुणेषु यत्नः क्रियतां किमाटोपैः प्रयोजनम् ।
विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥ ७ ॥

गच्छन् पिपीलिको याति योजनानां शतान्यपि ।
अगच्छन् वैनतेयोऽपि पदमेकं न गच्छति ॥ ८ ॥

चिन्तनीया हि विपदामादावेव प्रतिक्रिया ।
न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे ॥ ९ ॥

अपूर्वः कोऽपि कोशोऽयं विद्यते तव भारति ।
व्ययतो वृद्धिमायाति क्षयमायाति संचयात् ॥ १० ॥

विदेशेषु धनं विद्या व्यसनेषु धनं मतिः ।
परलोके धनं धर्मः शीलं सर्वत्र वै धनम् ॥ ११ ॥

महाजनस्य संपर्कः कस्य नोन्नतिकारकः ।
पद्मपत्रस्थितं वारि धत्ते मुक्ताफलश्रियम् ॥ १२ ॥

पिपीलिकः=ant. वैनतेयः=गरुडः; आटोपः=बाह्याडंबरः; भारती=सरस्वती; कोशः=भाण्डागारः; व्ययः=प्रदानम्; व्यसनं=क्रीडादिषु अत्यासक्तिः; मुक्ताफलश्रियं=मौक्तिकशोभाम् ।

---

# चत्वारिंशो दिवसः

(वैदिकभाषापरिचयः)

केवलं भाषाविशेषपरिचयार्थमेव ऋग्वेदात् केचन मन्त्राः अत्रोद्ध्रियन्ते। वेदानां प्रामाण्यस्य महत्वस्य सौन्दर्यस्य वा न खलु ते निदर्शका इत्यवधार्यम्। समुद्रजलस्य रसपरिज्ञानाय द्वित्राः कणिका एव पर्याप्ताः। किन्तु सागरस्य वैपुल्यगांभीर्यादिपरिज्ञानं तु तदवगाहेनैव लभ्यते।

ऋक् = स्तोत्रं; वेदः = आध्यात्मिकज्ञानप्रधानो ग्रन्थः। तथा च ऋग्वेद इत्यस्य स्तोत्ररूपेणात्मज्ञानप्रदायको ग्रन्थ इत्यर्थः सिध्यति। अत्र ऋग्वेदात् इतस्ततः त्रीणि सूक्तान्युद्ध्रियन्ते। तेषु प्रथमं अर्थवादप्रधानं। कस्यचिद् देवस्य महत्वादिगुणानां अतिशयेन वर्णनमेवार्थवादः। द्वितीयं सूक्तं सूर्यस्तुतिपरम्। तृतीयं तु केवलमात्मतत्वप्रधानम्।

गृत्समदो नाम ऋषिः इदमर्थवादप्रधानं सूक्तं त्रिष्टुप्छन्दसा निबध्य इन्द्रं कीर्तयति। त्रिष्टुप्, अनुष्टुप् इत्यादयः छन्दोविशेषाः।

मण्डलम् 2 सूक्तम् 12

गृत्समद ऋषिः। त्रिष्टुप् छन्दः। इन्द्रो देवता।

1) यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत्।
यस्य शुष्माद् रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः॥

ऋग्वेदस्य द्वितीयमण्डलादुद्धृतमिदं सूक्तम्। अस्याध्ययनात् पूर्वम् कस्याश्चित् कथाया अवतारणमावश्यकम्। गृत्समदो नाम कश्चित् ब्राह्मणो यज्ञमारभत। तस्मिन् यागे अंशभोक्तृत्वात् इन्द्रः सन्निहितः। इन्द्रम् यागशालान्तर्गतम् ज्ञात्वा तम् बहिर्निर्गमनसमये ग्रहीतुं असुराः यज्ञवाटमभितः परिवव्रुः। एतत् ज्ञात्वा इन्द्रो गृत्समदस्य रूपम् धृत्वा बहिर्जगाम। असुरास्तु तम् बहिर्गच्छन्तम् गृत्समदमेवाज्ञीगणन्। ते इन्द्रम् बहिर्गच्छन्तम् प्रतीक्षमाणाः तत्रैव चिरम् तस्थुः। अन्ते कालविलंबमसहमाना असुराः यज्ञवाटस्यान्तर्विविशुः। तत्र गृत्समदम् दृष्ट्वा ते एवमचिन्तयन्। "अह

कोऽयं कपटो गृत्समदः? सत्यतस्तु गृत्समदः पूर्वमेव बहिर्गतः। अयमिन्द्र एवास्मद्भयेन गृत्समदरूपं धृत्वा तिष्ठति नूनम्"। एवं चिन्तयन्तस्ते असुराः गृत्समदं ग्रहीतुमुद्युक्ता अभवन्। तदा गृत्समदस्तान् कथयति। "हे जनाः नाहमिन्द्रः। इन्द्रः स एव यो जात एव प्रथमो मनस्वान्" इति।

मनस्वान्= मनस्विनामग्रगण्यः; देवः =देवमानः (द्योतमानः)। क्रतुना = कर्मणा (वृत्रवधादिरूपेण); पर्यभूषत्; =रक्षकत्वेन पर्यग्रहीत्; देवान् पर्यभूषत् =देवान् अत्यक्रामत्; शुष्मात् =शरीरबलात; रोदसी =द्यावापृथिव्यौ, अभ्यसेतां =अबिभीतां (अवेपेतां); नृम्णस्य =सेनाबलस्य। मह्ना = महत्त्वेन; जनासः =जनाः।

गृत्समदोऽसुरान् ब्रूतेः—

*व्याख्या—स जनास इन्द्रः। जनासः =हे जनाः; स इन्द्रः। यो बहिर्गतः स एवेन्द्रः। नाहमित्यर्थः। सः इति तच्छब्देन निर्दिष्टं इन्द्रं विशिनष्टि पूर्वनिर्दिष्टैर्वाक्यैः। यो जात एव प्रथमो मनस्वान् =यो जातमात्र एव प्रथमो वीर्यादिभिर्गुणैस्सर्वप्रथमः, मनस्वान् मनस्विनामग्रगण्यश्च भवति। देवो देवान् क्रतुना पर्यभूषत =यो देवो शोभमानः क्रतुना साहसिककर्मभिः देवान् स्वजनान् अत्यक्रामत्। यस्य शुष्मात् रोदसी अभ्यसेतां नृम्णस्य मह्ना =यस्य शुष्मात् शरीरबलात् नृम्णस्य मह्ना सैन्यबलस्य महत्त्वेन च रोदसी भूमिमाकाशम् चाभिव्याप्य यः प्रदेशः स अभ्यसेतां भयेनावेपेताम्। (रोदसशब्दो नित्यं द्विवचने प्रयुज्यते) स एवेन्द्रः, नत्वहमिति जानीत।

सारः—यो जातमात्र एव देवानामादिमो मनस्विनामग्रिमश्चाभवत् यः स्वैः साहसिककर्मभिः इतरान् देवानत्याक्रामत् तथा यस्य शारीरिकबलेन सैन्यबलेन च भूमिमाकाशं चाभिव्याप्य सर्वा दिशः भयेन अवेपन्त स एवेन्द्रः, नाहमिति हे जनाः, यूयं जानीत।

दीव्यति इति देवः। परि+भू (लुङ्) परि+अ+भू+स+त्। भ्यस भयार्थको धातुः। अ+भ्यस्+ईतां =अभ्यसेतां। राजा इतिवत् मह्ना

---

*पद्ये विद्यमानानां एकैकेषां पदानां अन्वयक्रमेणार्थकथनं व्याख्या।

इत्यत्र उपान्त्याकारलोपः । जनास इत्यत्र अस इति बहुवचनप्रत्यये सकारस्य विसर्गाभावो विशेषः । कालान्तरे एव सकारः विसर्गरूपेण परिणतोऽभूदित्यनेनानुमेयं भवति ।

2) यः पृथिवीं व्यथमानामदृंहत् यः पर्वतान् प्रकुपिताँ अरम्णात् ।
यो अन्तरिक्षं विममे वरीयः यो द्यामस्तभ्नात् स जानस इन्द्रः ॥

अदृंहद् = दृढामकरोत् (वर्धयामास); प्रकुपितान् = इतस्ततश्चलितान्; अरम्णात् = नियमितानकरोत् (स्वस्थानेषु निवेशयामास); विममे = निरमात्, निर्माति स्म; वरीयः = उरुतमम्, महत् । द्यां = दिवं । अस्तभ्नात् = तस्तम्भ ।

यः इन्द्रः व्यथमानां भूकम्पादिभिः व्यथमानां दुःखितां पृथवीं भूमिं अदृंहत्, दृढामकरोत् । यः इन्द्रः भूकम्पादिभिः कम्पमानां भूमिं स्वप्रभावेण दृढामकरोत् इत्यर्थः । तथा यः प्रकुपितान् इतस्ततश्चलितान् पर्वतान् स्वस्वस्थानेषु निवेशयामास । पर्वतानां पुरा पक्षाः अविद्यन्त किल । इयं कथा तु 'पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः' । इत्यस्य पद्यस्य अध्ययनावसरे विवृता खलु ।

सारः— भूकम्पादिभिः नित्यदुःखमनुभवन्तीं भूमिं यः दृढां अकरोत् यश्च पक्षसहितान् पर्वतान् पक्षच्छेदेन तत्तत्स्थानेषु नियमितान् अकरोत्, यः उरुतमं अथवा महत् आकाशं निर्मितवान्, यः दिवं स्तम्भयित्वा अस्माकमुपरि स्थापयामास, स इन्द्रः; नाहमित्यर्थः ॥

3) यो हत्वाहिमरिणात् सप्त सिन्धून् यो गा उदाजद् अपधा वलस्य ।
यो अश्मनोरन्तरग्निं जजान संवृक् समत्सु स जनास इन्द्रः ॥

अहिं = मेघं । हत्वा = भित्वा (प्रस्राव्य) । सिन्धून् = नदीः । अरिणात् = प्रैरयत् । बलस्य अपधाः = बलेन निरुद्धाः । उपाजत् = निरगमयत् । अश्मनोः = मेघयोः (मध्ये) । जजान = उत्पादयामास । संवृक् = संहारकः । समत्सु = समरेषु

अन्वयः— यो अहिं हत्वा सप्त सिन्धून् अरिणात्, यो बलस्य अपधाः गाः उदाजत् । योऽश्मनोः अन्तः अग्निं जजान, यः समत्सु संवृक् च स इन्द्रः । हे जनाः, नाहमिन्द्रः ।

सारः—य इन्द्रः मेघं वज्रेण छित्वा सप्त सिन्धून् प्रैरयत्; तथाहि अन्तर्गूढजलं मेघं वज्रेण छित्वा सप्त नदीः प्रवहणाय प्रेरयामास, यो वलासुरेण अपहृता निरुद्धाश्च गाः तन्नियन्तारं वलं हत्वा निरगमयत्, यो मेघयोर्मध्ये अग्निं सृष्टवान्, यो युद्धेषु सर्वसंहारको वर्तते, हे जनाः स एवेन्द्रः; न त्वहम् ।

4 येनेमा विश्वा च्यवना कृतानि यो दासं वर्णं अधरं गुहाकः ।
श्वघ्नीव यो जिगीवान् लक्षमादत् अर्यः पुष्टानि स जनास इन्द्रः ॥

च्यवना =नश्वराणि; दासं वर्णं = रवर्णं; अधरं= निकृष्टं; गुहा =गुहायां (नरके); अकः =अकार्षीत्; श्वघ्नी =व्याधः (श्वभिः मृगान् हन्ति); जिगीवान् =जितवान्; लक्षं =लक्ष्यम्; आदत् =आदत्ते; अर्यः = अरेः; पुष्टानि =समृद्धाः सम्पदः ।

अन्वयः—येन इमाः च्यवनाः विश्वाः कृतानि, यः दासं अधरं वर्णं गुहा अकः, यः श्वघ्नी इव लक्षं जिगीवान्, यः अर्यः पुष्टानि आदत जनास, स इन्द्रः ।

सारः—य एतान् चराचरात्मकान् लोकान् चकार, यो निकृष्टं आर्येतरजनवर्गं अधश्चकार, यो व्याध इव शत्रुसंहाररूपं लक्ष्यं प्राप्तवान् यः शत्रूणां समृद्धाः सम्पदः आदत्त, हे जनाः, स एवेन्द्रः, नाहम् ।

5 यस्याश्वासः प्रदिशि यस्य गावः यस्य ग्रामाः यस्य विश्वे रथासः।
यः सूर्यम्ः य उषसं जजान यो अपां नेता स जनास इन्द्रः ॥

अश्वासः =अश्वाः; प्रदिशि =अनुशासने; विश्वे =सर्वे; रथासः = रथाः, अपां =जलानां (मेघभेदनेन); नेता =प्रेरकः ।

अन्वयः—यस्य प्रदिशि अश्वासः गावः ग्रामाः विश्वे रथासः च सन्ति, यः सूर्यं जजान, यः उषसं जजान, यः अपां नेता, हे जनास, स इन्द्रः, नाहम् ।

सारः—यस्य शासने सर्वे अश्वाः, गावः, ग्रामाः रथाः च वर्तन्ते, यः उषःकाल सूर्यम् च अजनयत्, यः जलानां प्रेरकः, स एवेन्द्रः, नाहम् ।

मंडलम् 6 सूक्तं 57

(भरद्वाज ऋषिः *गायत्री छन्दः । इन्द्रपूषाणौ देवता)

1) इन्द्रा नु पूषणा वयं । सख्याय स्वस्तये । हुवेम वाजसातये ।

इन्द्रापूषणा =इन्द्रपूषाणौ; पूषा= सूर्यः; नु =अद्य; सख्याय= सखित्वाय; स्वस्तये =शोभनाय; वाजसातये =अन्नस्य लाभाय; हुवेव= स्तवाम ।

अन्वयः—वयं नु इन्द्रापूषणा स्वस्तये सख्याय वाजसातये हुवेम ।

सारः—वयं अद्य इन्द्रं पूषाणां च शोभनाय सौहार्दाय अन्नस्य लाभाय च स्तवाम । इन्द्रं सौहार्दाय पूषाणं अन्नाय चेति विवेकः ।

2) सोममन्य उपासदत् । पातवे चम्वोः सुतम् । करम्भमन्य इच्छति ।

सोमम्=पेयम्; उपासदत् =उपागच्छति; पातवे =पातुम् । चम्वोः = हव्ययोः; सुतं =अभिषुतं (प्रसिक्तं); करम्भं =घृतसिक्तं सक्थ्वात्मकं हविः ।

अन्वयः—अन्यः चम्वोः सुतं सोमं पातवे उपासदत् । अन्यः करम्भं इच्छति । अन्यः पूषा तु धृतसिक्तान् सक्तून् भक्षयितुमिच्छति । (तयोरन्यः= तयोरेकः; तेष्वन्यतमः =तेष्येकः । )

3) अजा अन्यस्य वह्नयो । हरी अन्यस्य संभृता । ताभ्यां वृत्राणि जिघ्नते ।

अजाः =छागाः (goats); वह्नयः= वाहकाः । हरी =अश्वः; संभृता =पुष्टाः; वृत्राणि =शत्रून्; जिघ्नते =हन्ति ।

अन्वयः—अजाः अन्यस्य वह्नयः (भवन्ति) । हरी अन्यस्य संभृता (भवति) । ताभ्यां वृत्राणि जिघ्नते ।

सारः—अजाः अन्यस्य बाहकाः भवन्ति । अश्वाः अन्नैः पुष्टाः च भवन्ति । ताभ्यां अजाश्वाभ्यां इन्द्रः शत्रून् हन्ति ।

---

*गायत्रीच्छन्दसि वयः स्तावाः प्रायशो दृश्यन्ते । त्रिष्टुप् अनुष्टुप् आदयः छन्दोविशेषाः ।

4) यदिन्द्रो अनयद्रितो । महीरपो वृषंतमः । तत्र पूषाभवत् सचा ।

यद् = यदा; वृषंतमः = अतिशयेन वर्षितः । रितः = गन्त्रीः (स्रवन्तीः) महीः = महतीः; अपः = वृष्ट्युदकानि; सचा = सहायः ।

अन्वयः—यद् वृषंतमः इन्द्रः रितः महीः अपः अनयत् । तत्र पूषा सचा अभवत् ।

सारः—यदा अतिशयेन वर्षन् इन्द्रः स्रवन्तीः महतीः नदीः इमं लोकं अनयत् तदा सूर्यः तस्य सहायः अभवत् ।

5) तां पूष्णः सुमतिं वयं । वृक्षस्य प्रवयामिव । इन्द्रस्य चारभामहे ।

पूष्णः = सूर्यस्य; सुमतिं = अनुग्रहबुद्धिं; प्रवयां = प्रकृष्टां शाखां । आरभामहे = आलंबामहे ।

अन्वयः—पूष्णः इन्द्रस्य च तां सुमतिं वृक्षस्य प्रवयां इव वयं आरभामहे ।
सारः— सूर्यस्य इन्द्रस्य च तां अनुग्रहबुद्धिं वृक्षस्य दृढां शाखां इव वयं आलंबामहे ।।

6) उत् पूषणं युवामहे । अभीशूनिव सारथिः । मह्यै इन्द्रं स्वस्तये ।

उद्युवामहे = उद्योजयामः (आकर्षयामः प्रोत्साहयामः) । अभीशून् = रश्मीन् (bridle) ; मह्यै = महत्यै । स्वस्तयै = रक्षायै ।

अन्वयः— पूषणं इन्द्रं च वयं मह्यै स्वस्तये सारथिः अभीशून् इव उद्युवामहे ।

सारः—वयं सूर्यं इन्द्रं च अस्माकं महत्यै रक्षायै यथा सारथिः रश्मीन् आकर्षति तथा प्रोत्साहयामः ।

---

॥ पुरुषसूक्तम् ॥

**मण्डलम् 10, सूक्तम् 90**

[पुरुषसूक्तमिति प्रसिद्धमिदं सूक्तं ऋग्वेदस्यान्तिममण्डलेऽन्तर्भूतम् । एतादृशानि परश्शतानि सूक्तान्येव अनन्तरकाले उपनिषत्सु विद्यमानानां

तत्त्वविचाराणां प्रचोदकीबभूवुरिति मन्ये। अत्र तु सूक्ते विश्वं व्याप्य वर्तमानस्य सर्वचराचराधारभूतस्य परमात्मनो महत्त्वमद्भुतस्वभावश्च वर्ण्यते।]

नारायणो नाम ऋषिः। अन्त्या त्रिष्टुप्, शिष्टा अनुष्टुभः। पुरुषो देवता।

1) सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।
स भूमिम् विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम्॥

पदच्छेदः—सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् सः भूमिं विश्वतः वृत्वा अत्यतिष्ठत् दशाङ्गुलम्।

सहस्रशीर्षा=सहस्रं शीर्षाणि यस्य सः। पुरुषः=आत्मा। सहस्राक्षः=सहस्रं अक्षीणि यस्य सः। सहस्रपात्=सहस्रं पादाः यस्य सः। विश्वतः=सर्वतः। वेष्टच=परिवेष्टच, अभिव्याप्य। अति अतिष्ठत्=अतिक्रम्य अतिष्ठत्। दशाङ्गुलं=दशाङ्गुलपरिमितं देशम्।

अन्वयः—पुरुषः सहस्रशीर्षा सहस्राक्षः सहस्रपाद् अस्ति। सः भूमिं विश्वतः वृत्वा दशांगुलं अत्यतिष्ठत्।

सारः— अस्मिन् प्रपंचे यावन्तः शीर्षाः सन्ति यावन्ति अक्षीणि सन्ति यावन्तश्च पादाः सन्ति ते सर्वेऽपि तस्यैवात्मन अंशाः इत्यर्थः। लोके विद्यमानाः सर्वेऽपि प्राणिनः तस्य परमात्मनोंऽशाः इति तात्पर्यम्। स ब्रह्माण्डमभिव्याप्य ततोऽप्यपरिमेयतया ब्रह्माण्डात् बहिरपि सूक्ष्मरूपेण तिष्ठति।

2) पुरुष एवेदं सर्वं यद् भूतं यच्च भव्यम्।
उतामृतत्वस्येशानः यदन्नेनातिरोहति॥

पदच्छेदः—पुरुषः एव इदं सर्वं, यद् भूतं यद् च भव्यम्। उत अमृतत्वस्य ईशानः यद् अन्नेन अतिरोहति।

उत=अपि च; ईशानः=स्वामी।

सारः— इदं दृश्यमानं सर्वमपि वस्तु पुरुष एव। न खलु अधुना दृश्यमानं, किन्तु दृष्टपूर्वं द्रक्ष्यमाणं च। भूतं वर्तमानं भविष्यत् च यद्वस्तु–

जातं तत् सर्वं पुरुषमयं अथवा आत्ममयमेवेत्यर्थः । अपि च, यद् वस्तु भक्ष्यादिरूपेण अन्नेन परिपुष्टिं प्राप्नोति तस्मिन् वस्तुनि विद्यमानस्य अनश्वररूपस्य जीवात्मनः स्वामी स पुरुषः परमात्मा एव । यथा अन्तरिक्षे विद्यमानः वायुः जन्तोः शरीरे श्वासरूपतया प्रवर्तते, यथा भौमाः पदार्थाः परिणमय्य जन्तोः शरीरे करचरणाद्यवयवतया प्रवर्तन्ते यथा च जलं परिणमय्य रक्तस्वेदादिरूपं भवति तथैव विश्वव्यापी स परमात्मा जीवरूपतया परिणमय्य जन्तूनां स्वामी भवति ।

3) एतावान् अस्य महिमा अतो ज्यायान् च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥

एतवान् = इयान्; अतः = अस्मात्; ज्यायान् = महत्तरः; पादः = चतुर्थोऽशः; विश्वा = सर्वाणि; भूतानि = चराचरात्मका जन्तवः; त्रिपाद् = अवशिष्टास्त्रयोंऽशाः; अमृतं = विनाशरहितं; दिवि = अस्मदिन्द्रियागोचरे लोके अथवा द्योतमाने स्वप्रकाशस्वरूपे ।

अन्वयः—अस्य महिमा एतावान् । पुरुषः अतः च ज्यायान् । विश्वा भूतानि पादः । अस्य त्रिपाद् दिवि अमृतं वर्तते ।

सारः—एतावान् अस्य महिमा भवति । तथाहि यानि यानि वस्तून्यस्मिन् प्रपंचे दृश्यन्ते तानि सर्वाण्यपि तस्य पुरुषस्य महिमविलास एव । न तु तस्य वास्तवं स्वरूपम् । तत् अस्मादृशां द्रष्टुमशक्यमेव । उक्तं स्पष्टीकरोति उत्तरार्धेन । अस्य विराट्पुरुषस्य पादः चतुर्थोऽश एवास्माभिर्दृश्यमानोऽयमपारः प्रपंचः । अवशिष्टास्त्रयोंऽशास्तु दिवि इन्द्रियागोचरे लोके अमृतमनश्वरत्वेन वर्तन्ते । महर्षयोऽपि चिरन्तनैस्तपोभिः तस्य परमपुरुषस्य चतुर्थमेतमंशमेव दृष्टवन्तः, किमुत साधारणा जनाः ।

4) त्रिपादूर्ध्व उदैत् पुरुषः पादोऽस्येहाभवत् पुनः ।
ततो विष्वङ् व्यक्रामत् साशनानशने अभि ॥

त्रिपात् = चतुर्णामंशानां त्र्यंशरूपः । उदैत् = उदतिष्ठत्, सर्वोत्कर्षेणावर्तत; विष्वङ् = विविधस्वरूपः । व्यक्रामत् = व्याप्तवान्; साशनानशने = साशनं च अनशनं च; साशनं = अशनविसर्जनादिसहितं जन्तुजातं । अनशनं = तद्रहितं शैलशिलादिकम् ।

अन्वयः—त्रिपाद् पुरुषः ऊर्ध्वं उदैत्। पुनः अस्य पादः इह अभवत्। ततः साशनानशने अभि। सः विष्वङ् व्यक्रामत।

सारः—त्र्यंशरूपः स ब्रह्मस्वरूपः पुरुषः सांसारिकैर्दोषैरस्पृष्टः ऊर्ध्वं तिष्ठति स्म। पुनः अस्य चतुर्थमिकोंऽशः सृष्टिसंहारात्मिकायां मायायां व्यापृतोऽभवत्। मायास्वरूपेऽस्मिन् संसारे स एव सततं प्रावर्तत इत्यर्थः। स पादांशः तदनन्तरं भक्षणपानविसर्जनादिसहितं तिर्यङ्मनुष्यात्मकं जन्तुजातं, तद्रहितं शैलशिलादिकं च भूत्वा ब्रह्माण्डं व्याप।

5) तस्मात् विराळजायत विराजो अधिपूरुषः।
स जातो अत्यरिच्यत पश्चाद् भूमिमथो पुरः॥

तस्मात्=आदिपुरुषात्। विराट्=ब्रह्माण्डदेहः। विराजः अधि= विराड्रूपं ब्रह्माण्डमधिकरणं कृत्वा। पूरुषः=जीवः। अत्यरिच्यत= व्यतिरिक्तः अथवा विभिन्न अभवत्। पुरः=शरीराणि (पूः पुरौ पुरः। रेफान्तः शब्दः।)

सारः—तस्मात् आदिपुरुषात् ब्रह्माण्डदेहोऽजायत। तं ब्रह्माण्डं आधारीकृत्य जीवः समुत्पन्नः। जातः स जीवात्मा आदिपुरुषात् परमात्मनः गुणविशेषैः विभिन्नोऽभवत्। पश्चात् भूमिं ससर्ज। ततः शरीराणि च।

6) यत्पुरुषेण हविषा देवाः यज्ञमतन्वत।
वसन्तो अस्यासीदाज्यं, ग्रीष्म इध्मः, शरद्धविः॥

पदच्छेदः—यत् पुरुषेण हविषा देवाः यज्ञं अतन्वत, वसन्तः अस्य आसीद् आज्यं, ग्रीष्मः इध्मः, शरद् हविः।

यद्=यदा। अतन्वत=अतन्वन्। आज्यम्=घृतं। इध्मः=इन्धनम्।

सारः—यदा जीवांशतया देवा अजायन्त तदा ते यागं कर्तुमारभन्त। किन्तु ते यागसामग्रीः नालभन्त। यागद्रव्याणि तावत्पर्यन्तं न संजातान्यासन्। तदा ते पुरुषमेव हविषः स्थाने संकल्प्य यज्ञमन्वतिष्ठन्। वसन्तः घृतस्य स्थाने कल्पितः। ग्रीष्मः इन्धनत्वेन कल्पितः। शरद् पुरोडाशस्य स्थाने च।

7) तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः।
तेन देवा अयजन्त साध्या ऋषयश्च ये॥

यज्ञं=यज्ञसाधनभूतं। साध्याः= प्रमुखाः। बर्हिषि=मानसे। प्रौक्षन्=प्रोक्षितवन्तः।

अन्वयः — अग्रतः जातं तं यज्ञं पुरुषं बर्हिषि प्रौक्षन्। ये देवाः साध्याः ऋषयश्च (ते) तेन अयजन्त ।

सारः— आदौ जातं यज्ञसाधनभूतं पुरुषं मानसे ध्यायन्तः देवाः साध्याः मुनयश्च यागं निर्वर्तयामासुः ।

8 तस्माद् यज्ञात् सर्वहुतः संभृतं पृषदाज्यम् ।
पशून् तांश्चक्रे वायव्यान् आरण्यान् ग्राम्याश्च ये ॥

सर्वहुत =सर्वात्मकः पुरुषो यस्मिन् यज्ञे हूयते सः । पृषदाज्यं = दधि घृतं च । सभृतं= संपादितं वायव्यान् =वायुदेवताकान् । आरण्यान्= वन्यात् । तान्+चक्रे ।

अन्वयः—सर्वहुतः तस्मात् यज्ञात् पृषदाज्यं संभृतम्। वायव्यान् आरण्यान् तान् पशून्, ये ग्राम्याः तान् च चक्रे ।

सारः—पुरुषनिर्व्यूढात् तस्मात् यज्ञात् दधिघृतादि सम्मिश्रमन्नं सम्पादितम्। तस्मादेव यज्ञात् हरिणादयो वन्यमृगाः गवाश्वादयो ग्राम्य-मृगाश्च उत्पादिताः ।

9 तस्माद्यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्मात् यजुस्तस्मादजायत ॥

सर्वहुतः =सर्वैः पूर्वोक्तैः साधितात् । जज्ञिरे =अजायन्त ।

सारः—पूर्वोक्तप्रकारेण सर्वैरपि साधितात् तस्माद् यज्ञात् ऋचः सामानि च अजायन्त । एवं छन्दांसि जातानि । यजुः च जातम् ।

10 तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात् तस्माज्जाता अजावयः ॥

उभयादतः =उभयतः दन्ताः येषां ते ऊर्ध्वमधश्च प्रसृताः दन्ता येषां ते इत्यर्थः; अविः =अजविशेषः ।

सारः—तस्मात् यज्ञात् अश्वाः जाताः । किंच ऊर्ध्वप्रसारितविषाणा हरिणादयः अधःप्रसृतदन्ताः गजादयश्च तस्मादेव संजाताः। गावः अजाः अवयः तस्मादेवाजायन्त ।

11 यत् पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्य कौ बाहू का ऊरू पादा उच्यते ॥

यद् =यदा । व्यदधुः =उत्पादयामासुः । कतिधा =कतिभिः प्रकारैः । व्यकल्पयन् =कल्पितवन्तः ।

अन्वयः—यद् (देवाः) पुरुषं व्यदधुः तदा (ते) कतिधा व्यकल्पयन्! अस्य मुखं किं ? (आसीत्) बाहू कौ ? ऊरू कौ ? पादौ कौ उच्येते !

सारः—यदा देवाः पुरुषं मानसेन यज्ञेनोत्पादयामासुः तदा केषांचित् विविधाः संशयाः समुत्पन्नाः। अस्य मुखं किमासीत् ? बाहू कावास्ताम् ? कौ नामोरू ? पादौ च कौ ? इति विविधाः प्रश्नाः सञ्जाताः।

12 ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥

अत्र तान् प्रश्नान् समाधत्ते। राजन्यः=क्षत्रियः। अर्थः स्पष्ट एव।

13 चन्द्रमा मनसो जात, श्चक्षोः सूर्यो अजायत।
मुखादिन्द्रश्चाग्निश्च, प्राणाद्वायुरजायत ॥

14 नाभ्या आसीदन्तरिक्षं, शीर्ष्णो द्यौः समवर्तत।
पद्भ्यां भूमिर्दिशः श्रोत्रात् तथा लोकानकल्पयन् ॥

शीर्ष्णः=शिरसः। द्यौः=ऊर्ध्वलोकः। समवर्तत=अजायत अकल्पयन्=असृजन्।

15 सप्तास्यासन् परिधयः त्रिः सप्त। समिधः कृताः।
देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम्।

सारः—अस्य यज्ञस्य परिधयः गायत्रीप्रमुखानि सप्त छन्दांसि आसान् त्रिः सप्त=एकविंशतिः समिधः कल्पिताः। एवं यस्य यज्ञं तन्वानास्तेन पुरुषं पशुत्वेन अकल्पयन्।

16 यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥

अन्वयः— देवाः यज्ञेन यज्ञं अयजन्त। तानि धर्माणि प्रथमान्यासन् यत्र पूर्वे साध्याः सन्ति तत् नाकं ते महिमानः सचन्ते।

सारः—अस्मिन् पुरुषसूक्ते प्रपंचितमाशयं संक्षिप्य कथयति। प्रजापतिप्राणरूपा देवाः मानसेन संकल्पेन यज्ञस्वरूपं प्रजापतिं अपूजयन्त। तस्मात्पूजनात् तानि जगद्धारकाणि मुख्यानि धर्माण्यासन्। अथास्य सूक्तस्योपासनफलं कथयति। यस्मिन् विराट्प्राप्तिरूपे नाके पूर्वे साध्याः देवाः सन्ति तं नाकं ते महात्मानः प्राप्नुवन्ति ये अस्य सूक्तस्योपासकाः भवन्ति।

[पुरुषसूक्तस्य सारोऽत्र संक्षिप्यते । अस्य प्रपंचस्य सृष्टिप्रक्रियैवात्र सूक्ते वर्ण्यते । आदिपुरुषः परमात्मा सर्वशक्तिसंपन्नः अस्मदिन्द्रिय-गोचरेऽस्मिन् ब्रह्माण्डे तथा तस्माद् बाहिरपि अभिव्याप्य वर्तते। तस्य पादोंऽश एवायं विपुलो ब्रह्माण्डगोलः। परमात्मा आदिपुरुषः मायासहितः सन् स्वांशान् जीवान् उत्पादयामास। ते एव देवाः। ते पुनरपि सृष्टि प्रक्रियासु व्यापृता अभवन्। अस्मिन् सूक्ते यज्ञपदेन सृष्टिप्रक्रियैवो-द्दिष्टा। अत्र प्रथमं, चतसृषु ऋक्षु परामृष्टः पुरुषः आदिपुरुषः परमात्मा। शिष्टासु निर्दिष्टस्तु जीवात्मा इत्यवधार्यम्।]

---

सह नाववतु, सह नौ भुनक्तु, सह वीर्यं करवावहै।
तेजस्वि नावधीतमस्तु मा विद्विषावहै॥

वेदाध्ययनारंभवेलायां अन्ते च गुरुणा शिष्यैश्च एकीभूय गीयमान-मिदं समूहप्रार्थनागानं प्राचीनेषु गुरुकुलेषु सार्वत्रिकं प्रचारमविन्दत। अय-मस्यार्थः—नौ+अवतु। नौ गुरुशिष्यौ सह सममेव ईश्वरः अवतु=रक्षतु। शिष्यं विहाय गुरोः, गुरुं विहाय शिष्यस्य च रक्षा न प्रार्थनीयेति सह-शब्दस्य तात्पर्यम्। अयमेव प्रायः सह नौ भुनक्तु इत्यस्याप्यर्थः। एकस्यै वार्थस्य विभिन्नैः पदैराविष्कारः प्रार्थनाचमत्कारहेतुः भवति। सह वीर्यं करवावहै। गुरु-शिष्यौ आवां सहवर्तिनौ भूत्वा विद्यायाः प्रभावं प्रद-र्शयावहै। नौ अधीतं तेजस्वि अस्तु। अधीतं=विद्या। गुरुशिष्य-योरावयोर्विद्या तेजस्विनी भवतु। उषःप्रकाश इवोत्तरोत्तरं उज्ज्वला भवतु इत्यर्थः। मा विद्विषावहै। यद्यपि गुरुशिष्ययोरावयोरभिप्राया व्यत्यस्ता भवेयुः तथापि तस्मात् कारणात् कदापि न विद्वेषकलुषौ भवाव। गुरौ शिष्यस्य सेवं भक्तिर्भवतु। शिष्ये गुरोः सेवानुग्रहबुद्धिश्च भवत्विति तात्पर्यम्। आश्चर्यतोऽप्याश्चर्यं पावनतोऽपि पावनं उत्तमतोऽप्युत्तमं उज्ज्वलतोऽप्युज्ज्वलमिमं मन्त्रं मुकुलितहस्ताः पुलकितगात्रा निमीलितनेत्रा अभिन्नकण्ठलयं पुनरपि पठित्वा दीक्षामिमामुपसंहराम।

सह नाववतु, सह नौ भुनक्तु, सह वीर्यं करवावहै।
तेजस्वि नावधीतमस्तु, मा विद्विषावहै॥

ओम् शान्तिः शान्तिः शान्तिः॥

---

अभ्यासः

I अस्मिन् दिने अधीतानि ऋग्वेदसूक्तानि अनुवदत ।

II कस्मादपि पुराणात् अथवा काव्यात् दश पद्यानि स्वयं पठित्वा तेषां अन्वयमर्थं च लिखत ।

III कामधेनुपद्धतिमधिकृत्य वस्तुनिष्ठं (objective) अभिप्रायं संक्षिप्य लिखत ।

शुभं भूयात् ।

---

यत् करोमि यदश्नामि यज्जुहोमि ददामि यत् ।
यत् तपस्यामि सर्वात्मन् तत्तदस्तु त्वदर्पणम् ॥

---

## समर्पणम्

शून्यं मे सकलं, यदस्ति भगवन् दत्तं समस्तं त्वयै-
वाप्तं यत् प्रतिभात्मकं दिनकरात्, वृक्षात् पराराधनम् ।
वैशाल्यं जलधेः, गिरेरचलता, वायोः सदा जागृति-
स्तत्तत् पुष्टिमवाप्नुयादनुदिनं प्रीत्यै परेषां मयि ॥

बुद्ध्वा वाऽनवबुध्य वा प्रतिदिनं कुर्वे शतान्यागसा-
मन्तस्तान्यनुतापभारपरिणामान्युत्तुदन्ते मनः ।
त्रुट्यामि प्रदहामि निश्वसिमि च क्षुभ्यामि मुञ्चाम्यहं
बाष्पं, मां नय दीनरक्षक परार्थेषु प्रवृद्धां रतिम् ॥

तृष्णा मां तपति त्वदर्पणपरानर्थान् विधातुं सदा,
दुःखैकान्तफलः परन्तु गृहिणां बन्धश्चरीकर्ति माम् ।
नित्यं त्वत्करुणा मृदोर्मृदुतरा मां भाति, भित्त्वा कथं
मोक्ष्येऽहं चिरसञ्चितरचितनरकाकारान् कारागृहात् ॥

कृत्याकृत्यविवेकगोष्ठीभिरुचिर्वर्धेत, सत्ये दृढा
वर्तेत क्षितपापकल्मषमषीशुद्धा मनीषापि मे ।
अन्तर्मे परतत्त्वबोधनचणो दीपः सदा दीप्यताम्
अन्येषां भविकाय सन्तु सततं कर्माणि सर्वाणि च ॥

हस्तं प्रेरय मे त्वदर्पणविधौ, चित्तं परावर्तय
क्षुद्रेभ्यो ह्यविरामभोगपरिणाहिभ्यः सुखेभ्योऽनिशम् ।
नास्त्यन्यो मम देशिकोऽत्र सकलान्तर्यामिनं त्वां विहा-
यान्धोऽन्धैरचरं चिरं धृतकरस्तेजोऽन्धतो मां नय ॥

---